॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला



१४८

# वैयाकरणभूषणसार-दीपिका

लेखक

पं० श्रीरामकिशोर त्रिपाठी

अध्यक्ष : व्याकरण-विभाग

ऋषि संस्कृत महाविद्यालय, हरिद्वार

चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक
चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ५७२१४



द्वितीय संस्करण १९९०
मूल्य १०-००

अन्य प्राप्तिस्थान
चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए. बंगलो रोड, जवाहरनगर
पो० बा० नं० २११३
दिल्ली ११०००७
दूरभाष : २३६३९१

*

प्रधान वितरक
चौखम्बा विद्याभवन
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पो० बा० नं० १०६९, वाराणसी २२१००१
दूरभाष : ६३०७६

मुद्रक
श्रीजी मुद्रणालय
वाराणसी

# किञ्चिन्निवेदनम्

याऽज्ञानपुञ्जं हरति प्रसूता स्वयम्भूपुत्री सुरवृन्दपूज्या ।
वागीश्वरीं तां प्रनतः किशोरो बालप्रबोधाय करोति दीपम् ॥

कालक्रमेणाध्ययनाध्यापनशैथिल्यप्रभावादतिदुस्तरशास्त्रमहोदधिं न पारयन्त आधुनिकच्छात्राः । अतिकठिनं व्याकरणशास्त्रं युक्तायुक्तविवेचनपरत्वात्, यस्य कस्यापि शब्दस्य व्युत्पादनव्यासक्तत्वाच्च । तत्रापि मीमांसकनैयायिकादिवादग्रथितं दर्शनभागं न ससहोद्विजति बुद्धिपटलम् । तत्र वैयाकरणभूषणातिरिक्ता अपि हरिविरचितं 'वाक्यपदीयं' नागेशविरचिता मञ्जूषा, लघुमञ्जूषा, परमलघुमञ्जूषादिभागत्रयमधिगता वैयाकरणसिद्धान्तमञ्जूषादयो ग्रन्थाः । येषु धात्वर्थादिविचारोऽन्यमतनिरसनपुरस्सरं सम्यक्तया विहितोऽन्याचार्यैरिति । परं कौण्डभट्टेन यादृग् विचारो भूषणसारे कृतः न तादृग्दृश्यते केपुचिदपि, महाभाष्यसागरोद्भूतभट्टोजिदीक्षितकृत-शब्दकौस्तुभनिर्णीतार्थप्रकाशकत्वात् । स च ग्रन्थोऽतिदुरूहतरो विविधमतविघटनपूर्वकस्वमतस्थापनव्यासङ्गत्वात् । न प्रभवन्ति सारतत्त्वमवगन्तुं बालाः, तद्बुद्धिवैभवकौशलधातिप्रबलमतिवेद्यत्वात् । इदमेव मनसि निधायातिसारल्येन वैयाकरणभूषणसारतत्त्वबोधिनीं प्रश्नोत्तरसङ्कलितां परीक्षोपयोगिनीं विरचितवान् । यदध्ययनमात्रेण परीक्षामुत्तीर्तुं शक्नुवन्तिच्छात्राः । जिज्ञासवश्च व्याकरणदर्शनसिद्धान्तमवगन्तुं पारयन्त इति ।

विदुषामनुचरः
पण्डितश्रीरामकिशोर त्रिपाठी

# भूमिका

शब्दसाधुत्वविधायकं व्याकरणं वेदमुख्याङ्गं पवित्रं प्रदीप इव सर्वशास्त्राणामुपकारकमस्ति । इदञ्च ब्रह्मप्राप्तिरूपसिद्धिसोपानपर्वणामाद्यं स्थानं मोक्षमाणानाञ्चाजिह्माराजपद्धतिरिति वाक्यपदीये उक्तम्—

'इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं हि मोक्षमाणानामजिह्मा राजपद्धतिः ॥'

अतः सर्वथाऽध्येयं व्याकरणम् ।

व्याकरणशास्त्रे वैयाकरणभूषणसारग्रन्थस्यातीव महत्त्वमस्तीति नातिरोहितम् । ग्रन्थोऽयं धात्वर्थादिविचारपरकः । विभिन्नदार्शनिकमतसमीक्षापूर्वकं वैयाकरणमतसंस्थापकः विदुषां ग्राह्यः मान्यः श्रीमता दीक्षितेन कारिकाबद्धः श्रीमता कौण्डभट्टेन सप्रमाणं आक्षेपसमाधानाभ्यां व्याख्यानवैयाकरणनिकाये प्राधान्यं भजते ।

ग्रन्थोऽयमाचार्यपरीक्षायां निर्धारितः । तत्र छात्राणां तद्विदाञ्च काठिन्यं प्रायः स्थले-स्थले जायते एव, परीक्षार्थिनाञ्च तद्ग्रन्थावगमे तत्र तत्र स्थले महान् क्लेशो भवतीति सर्वैरनुभूयते ।

व्याकरणाचार्या व्याकरणशास्त्रे लब्धतलान्तपाण्डित्याः, प्रतिभाभूषणभूषिताः, लेखनबोधनपाठनकलाकुशलाः, विख्याताः, गुरुषु निबद्धश्रद्धाः, विशुद्धधिषणाः, आयुष्मन्तः श्रीमन्तः रामकिशोरत्रिपाठिनः हरिद्वारे 'क'-वर्गीये व्याकरणविभागाध्यक्षपदमलङ्कुर्वाणाः परीक्षार्थिनां, छात्राणां तद्विदाञ्च ग्रन्थावगमकाठिन्यं पश्यन्तः सरलतया तदर्थावगमनाय च परीक्षोपयोगाय च वैयाकरणभूषणसारग्रन्थस्य सारमात्रां दीपिकाख्यां व्याख्यां व्यरचयत् । इयं व्याख्या प्रश्नोत्तरवती अतीव उपयुक्ता विशेषतः परीक्षार्थिनां छात्राणां सुग्राह्या ।

वयमस्या व्याख्यायाः सफलतां प्रचारं प्रसारं कामयमानः लेखकानाञ्चैषां त्रिपाठिमहोदयानां आयुष्यबुद्धिविद्यावैभवसमृद्धिकामा भगवन्तं साम्बं श्रीविश्वनाथं प्रार्थयमानाः शुभाशीर्भिरेनं सभाजयामः ।

**पारसनाथ द्विवेदी**
उपाचार्य, शाङ्करवेदान्त
सम्पूर्णानन्द सं० वि० वि०

# प्रश्न-सूची

---

॥ श्रीः ॥

# वैयाकरणभूषणसार-दीपिका

शास्त्राख्ये प्रकामं नटति हरिरसौ निर्भयो लक्ष्यदृष्टिः ।
नूनं शिष्याः प्रशिष्याः यदमितकृपया लब्धवृत्तिप्रतिष्ठाः ॥
स्वैरं लोके चरन्ति प्रलसितविभवाः शान्तिमाधतुं कामाः ।
वन्दे तं ज्ञानसिन्धुं गुरुवरमनघं स्तुत्यदेवस्वरूपम् ॥ १ ॥

गुरुं नत्वा सुधीमन्तं पारसनाथसंज्ञकम् ।
शब्दशास्त्रं मया लब्धं यस्याध्यापनगौरवात् ॥ २ ॥
तातं रामरुचिं रामावतारीं जननीं नतः ।
सुधीः रामकिशोराख्यः छात्राणामुपयोगिनीम् ॥ ३ ॥
साम्बश्रीविश्वनाथस्य प्रसादाल्लब्धलोचनः ।
व्याख्यां भूषणसारस्य दीपिकाख्यां तनोम्यहम् ॥ ४ ॥

## अथ धात्वर्थप्रकरणम्

(१) प्रश्नः—श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्त्तते ॥

माङ्गलिकश्लोकोऽयं ग्रन्थादौ मङ्गलप्रयोजनपुरस्सरं व्याख्यायताम् । (१९८५-१९८८)

उत्तरम्—मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति 'सिद्धे शब्दार्थसम्बन्धे' सूत्रस्थभाष्यवचनानुमत्या नमस्कारात्मकं मङ्गलं स्वग्रन्थावयवीकरोत्याचार्य इति मङ्गलं विघ्नध्वंसं प्रतिकारणं ग्रन्थसमाप्तिफलकाय वा अन्यदेतत् ।

श्रिया लोकोत्तरशोभया सहिता या लक्ष्मीर्माया यद्वा श्रिया सहितो लक्ष्मीरमण शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदस्य सहितेत्यस्य लोपः । तस्या रमणं दयितं विष्णुमित्यर्थः । अथवा श्रीश्च लक्ष्मीश्चेति विग्रहे द्वन्द्वं कृत्वा तयोः

रमणमिति षष्ठीतत्पुरुषः। 'श्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति यजुर्वेदे (३१।२२)। पत्न्याविति द्विवचननिर्देशेन तयोः पर्यायत्वाभावात्।

रूपयति तदभेदेन ग्राहयति रूपम्। गौर्याः रमणः गौरीरमणस्तस्य रूपं नित्यमस्यास्तीति विग्रहे 'भूमनिन्दाप्रशंसास्वित्यादिश्लोकवार्तिकसहकारेण' 'अत इनिठनावि'ति सूत्रेण नित्ययोगे इनिः। एवं च नित्यमेव गौरीरमण-रूपस्य सम्बन्धो न तु कादाचित्क इति। एतेन 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति न्यायेनात्रेनिप्रत्ययो न साधुरित्यपास्तम्। उक्तार्थस्य बहुव्रीहिणा अलाभात्। नौमिति—णूधातोः कर्तरि लट्। तदर्थश्चो-त्कृष्टगुणवत्वप्रकारकबोधानुकूलो व्यापारः। तत्र बोधे विष्णोर्निष्ठत्वेनान्वयः। तथा च गौरीरमणा भिन्न श्रीसहितलक्ष्मीरमणनिष्ठोत्कृष्टगुणवत्वप्रकारक-बोधानुकूलो मदभिन्नाश्रयवृत्तिर्व्यापार इति बोधः। 'भावप्रधानमाख्यातम्' इति निरुक्तोक्तेः।

स्फोटरूपमिति। स्फुटत्यर्थोऽस्मादिति स्फोटः शब्दः, रूप्यते बोध्यते इति रूपमर्थः। स्फोटश्च रूपं चानयोः समाहारद्वन्द्वः स्फोटरूपमिति। तादृशं सर्वं=सम्पूर्णं, जगत्=प्रपञ्चः। यतो=यस्माच्छब्दब्रह्मणः। विवर्तते=अतात्त्वि-कान्यथा भावाश्रयो भवति इत्यर्थः।

**(२) प्रश्नः—फलव्यापारयोर्धातुरिति कारिका निगूढाश्रयं विविच्य फलत्वं व्यापारत्वञ्च किमिति विशदं प्रतिपादयत।**

उत्तरम्—वैयाकरणतन्त्रे वाक्यस्फोटस्यैव प्राधान्यम्। तदर्थं सिद्धान्तभूत वाक्यस्फोटान्तर्गत सकलशब्दकारणीभूतधात्वर्थस्य तिङर्थस्य च विचारं पूर्वं वितनुते।

अत्र मीमांसकेषु मण्डनमिश्राः फलमेव धात्वर्थः, अनुकूलव्यापारस्तु आख्यातार्थः। अन्ये मीमांसकास्तु—व्यापारमात्रं धात्वर्थः फलं च द्वितीयार्थं इति। नव्यमीमांसकाश्च फलव्यापारौ धात्वर्थः। उभयत्र खण्डश एका शक्तिः। नैयायिकास्तु—फलव्यापारौ धात्वर्थः, आख्यातार्थः कृतिः, प्रथमान्तार्थमुख्य-विशेष्यकश्च शाब्दबोध इत्यामनन्ति। इत्येतद् विमतैः सिद्धान्तदोषमाकल-यद्भिराचार्यैः शब्दशास्त्रसिद्धान्तानुरूपं धातुः निरूप्यते। फलव्यारयोरिति—वाचकत्वं सप्तम्यर्थः फलवाचत्वं व्यापारवाचकत्वञ्च धातौ पृथक् शक्ती।

फले स्तोकादिकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदेनान्वयः। व्यापारे च कर्तुराश्रयतासम्बन्धेनान्वयः। 'देवदत्तस्तण्डुलं पचति' इत्यादौ शाब्दबोधस्तु

देवदत्ताभिन्नैककर्तृक तण्डुलाभिन्नैककर्मकविक्लित्त्यनुकूलो व्यापारः। कर्तृ-प्रत्ययसमभिव्याहारे व्यापारमुख्यविशेष्यकशाब्दबोधः, फलञ्च व्यापारे विशेषणम्। एवमेव कर्मप्रत्ययसमभिव्याहारे 'यज्ञदत्तेन ग्रामो गम्यते' इत्यादौ फलविशेष्यकश्च शाब्दबोधः। यज्ञदत्ताभिन्नैककर्तृक गमनानुकूलव्यापारप्रयोज्य संयोगरूपफलाश्रयो ग्रामः।

न्यायनये 'देवदत्तः तण्डुलं पचति' इत्यत्र शाब्दबोधस्तु—'तण्डुलाभिन्नैक-कर्मक विक्लित्त्यनुकूलव्यापारानुकूलकृतिमान् देवदत्त' इति। शाब्दिकनये मीमांसकनये च शाब्दबोधे न विमतम्। वैयाकरणनये फलव्यापारौ धातुवाच्यौ मीमांसकनये च फलं धात्वर्थः, व्यापारस्त्वाख्यातार्थः, कर्ताऽऽपेक्षलभ्य इत्यनयोर्विमतमिति।

कारिकार्थस्तु—फलवाचकत्वं व्यापारवाचकत्वञ्च धातोः पृथक् शक्ती तदाश्रयश्च तिङ्। स च कर्तृप्रत्ययसमभिव्याहारे व्यापाराश्रयः कर्मप्रत्ययसम-भिव्याहारे च फलाश्रय इति। तिङर्थस्तु कर्तृकर्मणो विशेषणम्। कर्तृप्रत्यय-समभिव्याहारे व्यापारस्यैव प्राधान्यं फलञ्च तस्मिन् विशेषणम्। कर्मप्रत्ययसम-भिव्याहारे फलस्यैव प्राधान्यं व्यापारस्तत्र विशेषणम्।

नागेशास्तु पृथक् शक्तिस्वीकारे फलव्यापारयोरुद्देश्यविधेयभावेनान्व-यापत्तिः। पृथगुपस्थितयोरर्थयोस्तथाऽन्वयस्यौत्सर्गिकत्वात्। किञ्च तत्पक्षे फलविशेषणकव्यापारबोधे कर्तृभावप्रत्ययसमभिव्याहृतधातुजन्योपस्थितेः, व्यापारविशेषणकफलबोधे च कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थिते कारण-त्वमिति कार्यकारणभावद्वयकल्पनम्, धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोध-जनकत्वसम्बन्धद्वयकल्पनं चेत्यतिगौरवम्। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातोः शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिहारश्च तत्तद्बोधे नियामकः।

'स्वरितञित' ( पा० सू १।३।७२ ) इतिसूत्रस्थफलपदस्य प्रवृत्त्युद्देश्य-मुख्यफले एव प्रसिद्धेः। तादृशफलस्य धातुवाच्यत्वे विक्लित्त्यनुकूलव्यापार-दशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिः।

अतः फलमत्र विक्लित्त्यादीनि, तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थि-तिविषयत्वं फलत्वम्। परे तु कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वं फलत्वम्। व्यापारत्वञ्च—पदान्तरसमभिव्याहाराप्रयोज्य[illegible]त्वप्रकाराभिधानविषयत्वमिति।

( ३ ) प्रश्नः—"यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते" इति करिका सप्रसङ्गं संसाध्यताम् ।

उत्तरम्—सिद्धं=निष्पन्नं, भूतकालावच्छिन्नम् अपाक्षीदित्यादौ । असिद्धम् =अनिष्पन्नं, वर्तमानभविष्यत्कालावच्छिन्नं 'पचति, पक्ष्यती'त्यादौ च । साध्यत्वेन=वक्ष्यमाणस्वरूपेण । साध्यत्वञ्च—पूर्वापरीभूतावयवत्वसमाना-धिकरणं कारकान्वयादियोग्यतावच्छेदकं यद्वैजात्यम् । क्रियान्तराकाङ्क्षानु-त्थापकतावच्छेदकरूपवत्वं वा साध्यत्वम् । तद्धर्मरूपेण, अभिधीयते=तत्प्रकारक-प्रतीति विषयीक्रियते । आश्रितं क्रमरूपं यस्यास्तत्त्वात्, पूर्वापरीभूतावयवक-त्वादित्यर्थः । यथा पच्धात्वर्थव्यापारावयवानाधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेस्तादृशावयवसमूहः क्रिया । इत्यभिधीयते=व्यवह्रियते कथ्यते वा ।

( ४ ) प्रश्नः—क्रियात्वं वैशद्येन परिष्कृत्य कर्तृकर्मणोः आख्यातार्थ-त्वे मानं विविच्यताम् ।

उत्तरम्—साध्यभूतो व्यापारः क्रिया, यद्यपि द्विविधा हि क्रिया—साध्यभूता सिद्धभूता च । साध्यत्वञ्च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्वम् ।

सिद्धत्वञ्च—क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्वे सति कारक-त्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम् । तथाऽप्यत्र क्रियापदेन साध्यभूतैव क्रिया स्वीक्रियते । तदाह—

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियाऽभिधीयते

एवञ्च क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैर्युक्तः सङ्कलना-त्मिकयैकत्वबुद्धया प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियते । तथाहि—

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥'

साक्षात्परम्परया वा सर्वकारकान्वयितावच्छेदकधर्मवती किया कर्तृकारकस्य निरूपकत्वसम्बन्धेन साक्षाद्व्यापारेऽन्वयः । कर्मकारकस्य च निरूपकत्व-सम्बन्धेन फलेऽन्वयः । करणादीनाञ्च परम्परया कर्तृकर्मणोः सम्बन्धेन क्रिया-मन्वयः । अतः सर्वकारकान्वयितावच्छेदकधर्मवती क्रियेति फलितम् । यद्यप्या-श्रयत्वेनाश्रयभानार्थं तत्राख्यातस्य शक्तिरावश्यकीत्येवोत्तरं वक्तुमुचितं तथापि

धातोः फलव्यापारयोः शक्तिराख्यातस्याश्रयत्वे शक्तिरिति मते आश्रयस्य आश्रयत्वेनापि लाभान्न सामान्यत आश्रये स्वाभिमताख्यातशक्तिः सिद्ध्यति इति तन्मतनिरासार्थमपि सूत्रमेव प्रमाणत्वेनोपन्यस्तमिति।

तथा च 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' मध्यमपुरुषविधानार्थम् एवञ्च 'अस्मद्युत्तमः' उत्तमपुरुषविधानार्थञ्च सूत्रद्वयम्। आभ्यामेवाख्यातार्थत्वे कर्तुः शक्तिरवगम्यते। एवञ्च 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रमेव प्रमाणम्। अत्र 'कर्तरि कृत्' इत्यतः 'कर्तरि' इत्यनुवर्तते; बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते।

आख्यातनिष्ठसंख्यायाः कर्मणि लकारे सति कर्मणि कर्तरि च सति कर्तरि अन्वयः। प्रथमान्तमुख्यविशेष्यकः शाब्दबोधो नैयायिकमते शाब्दिकानान्तु कर्तृप्रत्ययसमभिव्याहारे व्यापारमुख्यविशेष्यकः कर्मप्रत्ययसमभिव्याहारे च फलमुख्यविशेष्यकः इति।

(५) प्रश्नः—लडाद्यन्ते भावनाया अवाच्यत्वं वदतां मते के दोषाः? सर्वं वैशद्येन वैयाकरणभूषणदिशा विविच्यताम्।

उत्तरम्—लडाद्यन्ते इति लडादिरन्तो यस्येति अतद्गुणसंविज्ञानबहुव्रीहिणा धातुपरत्वमत्र अन्तशब्दस्य परसमीपवाचकत्वात्।

भावना धातुवाच्या न तस्या धातुवाच्यत्वे प्रकृतिप्रत्ययाविति न्यायेनाप्राधान्यापत्तेरिति प्राभाकराः। अत आह—प्राभाकरादीन् इति। आदिना—प्राचीननैयायिकसङ्ग्रहः। तन्मते व्यापारस्य धातुवाच्यत्वेऽपि भावनापदवाच्यत्वं नास्ति।

यद्यपि व्यापारो धात्वर्थत्वेन नैयायिकसम्मतः तथापि नासौ तन्मते भावनापदव्यपदेश्य इति। भावना चात्र धात्वर्थो व्यापारवाचकः फलवाचकश्च। एवं 'गुणभूतैरवयवैः' इत्याद्युक्तलक्षणलक्षितोऽर्थस्तद्वाचक व्यापारपदं भावनादिपदैरभिधीयते। फलमात्रं धात्वर्थो व्यापार आख्यातार्थं इति मीमांसकाः। व्यापारत्वस्याख्यातवाच्यतावच्छेदकत्वं निरस्य कृतित्वस्य नैयायिकैस्तद्व्यवस्थापितम्। तद्रीत्या धातोः कृतित्वमात्रं शक्यतावच्छदेकं भविष्यतीति। ननु यथा मीमांसकमते कृतित्वं शक्यतावच्छेदकं तथैव नैयायिकमते लक्ष्यतावच्छेदकमित्युभयोरपि मतयोर्गौरवमाकलय्य, फलव्यापारयोर्धातुरिति वैयाकरणसिद्धान्तः।

एवञ्च कृतिर्यत्नो स चाख्यातार्थं वाच्य इति । 'पाकं करोति' इत्यादौ यत्नार्थस्याख्यातेनैव विवरणात्, 'रथो गमनं करोति' 'बीजादिना अङ्कुरः कृतः' इत्यादौ कृञो यत्नार्थकताया अप्रसिद्धेः । यत्नार्थस्य ( व्यापारस्य ) भावनाया अवाच्यत्वे 'घटं भावयती'त्यत्रेव 'घटो भवती'त्यत्रापि द्वितीयापत्तेः । धात्वर्थफलान्विताख्यातार्थव्यापाराश्रयत्वरूपकर्तृत्वसत्त्वात् ।

अपि च भावनाया अवाच्यत्वे धातूनां सकर्मकत्वाकर्मकत्वविभाग उच्छिन्नः स्यात् । तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्मकत्वोच्छेदापत्तिः । इत्यादीन् दोषानुरीकृत्याह—

'व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥'

( ६ ) प्रश्नः—'व्यापारो भावना सैवोत्पादना सैव च क्रिये'त्यादि कारिकेयमुपक्रमोपसंहारपुरस्सरं व्याख्यायताम् । ( १९८४; ८८ )

उत्तरम्—ननु भावना धातुवाच्या तस्या धातुवाच्यत्वे प्रकृतिप्रत्ययाविति न्यायेनाप्राधान्यापत्तेरिति प्राभाकराः । अत्रोच्यते—पचति पाकमुत्पादयति, पाकानुकूला भावना तादृश्युत्पादनेति विवरणदर्शनात् विव्रियमाणस्य धातोर्वाचकता युक्ता । किञ्च भावनायास्तिङर्थत्वे 'भावयति घटमि'त्यत्रेव 'घटो भवती'त्यत्रापि द्वितीयापत्तिरुत्पत्तिरूपफलाश्रयत्वेन कर्मत्वात् । न च परया कर्तृसंज्ञया कर्मसंज्ञाया बाधान्नोक्तापत्तिरिति वाच्यम्, कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य च कर्त्तृत्वस्य घटादावसत्त्वेनानुगतकर्त्तृत्वस्य भवन्मते दुर्वचत्वात् । धात्वर्थानुकूलव्यापाराश्रयत्वस्य कारकमात्रे सत्त्वेन सर्वेषां कर्त्तृत्वापत्तेश्च । किञ्च स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वमिति सकर्मकत्वाकर्मकत्वव्यवस्थोच्छेदापत्तिः ।

अन्यतमत्वं सकर्मकत्वमित्यपि न, एकस्यैवार्थभेदेन सकर्मकत्वाकर्मकत्वदर्शनात् । एवञ्च फलमात्रस्य धात्वर्थत्वे यतीप्रयत्ने इतिवत् सर्वेषामकर्मकतापत्तिर्दुर्वारेति भावः । अथवा 'व्यापारो भावना' इत्यर्धेन व्यापारस्य धातुवाच्यत्वं संसाध्य जानाति करोतीत्यादेः केवलज्ञानयत्नादिक्रियामात्रवाचित्वं तार्किकाभ्युपगतं निराकरोति—कृञ् इति । कृञादेर्व्यापारमात्रवाचकत्वे पूर्वोक्तरीत्या सकर्मकत्वव्यवहारोच्छेदापत्तिः । न च लक्षणया सकर्मकत्वव्यवहारो भविष्यतीति वाच्यम्, गङ्गापदस्य तीरे भाक्तत्वेऽपि तत्र स्नानादिकार्याभाववत् मुख्यसकर्मकत्वमादाय शास्त्रस्य चारितार्थ्ये गौणे तद्व्यापारे मानाभावेन कर्मणि

लकारासम्भवात् । अत एव 'क्रियते घटः स्वयमेवे'ति प्रयोगोपपत्तिरन्यथायत्नस्य कर्मनिष्ठत्वाभावेन तादृशप्रयोगानुपपत्तिरिति भावः । ननु 'या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृता' इत्युक्तेऽपि क्रियाया भावनात्वलाभे कारिकायां व्यापारपदोपादानं विफलमिति चेन्न, फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यत्व-बोधनार्थं तस्यावश्यकत्वात् । यद्यपि कृतित्वस्य जातिरूपतया शक्यतावच्छेदकत्वे लाघवात् कृतिरेव धात्वर्थं इति तन्न, पचतीत्यादौ फूत्कारत्वादिप्रकारकबोधाय लक्षणाङ्गीकारे लक्ष्यतावच्छेदकत्वे गौरवस्य दुर्वारत्वादिति दिक् ।

( ७ ) प्रश्नः—तिङर्थाः के ? तेषां परम्पराऽन्वयप्रदर्शनपूर्वकं वैयाकरणनैयायिकमीमांसकमते शाब्दबोधे वैलक्षण्यं कथम् ? इति निरूपणीयम् ।

उत्तरम्—यथा फलव्यापारौ धात्वर्थस्तथैव कर्तृकर्मसंख्याकालाः तिङर्थास्तत्र कर्तृकर्मणी फलव्यापारयोराधाराधेयभावसम्बन्धेन विशेषणे । संख्या तु कर्तृप्रत्ययसमभिव्याहारे कर्त्तरि, यथा—'देवदत्तस्तण्डुलं पचति' कर्मप्रत्ययसमभिव्याहारे च 'चैत्रेण ग्रामो गम्यते' इत्यादौ कर्मणि प्रकारतयाऽन्वेति, एकप्रत्ययजन्योपस्थितिविषयत्वात् । एवञ्चाख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः । कालस्तु धात्वर्थव्यापारे विशेषणम् ।

न च समानप्रत्ययोपात्तत्वात् संख्यात्ववत् कर्तृकर्मणोरेवान्वयः कुतो नेति वाच्यम्, अतीतभावनाके कर्त्तरि पचतीति प्रयोगापत्तेः । अपाक्षीदिति प्रयोगानुपपत्तेश्च । नापि फले कालस्यान्वयः, फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्च । न च व्यापारे कालस्यान्वयस्वीकारे आमवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिरिति वाच्यम्, परयत्नस्य ज्ञानाभावेन तादृशप्रयोगासम्भवात् । किञ्चिच्चेष्टादिना यत्नानुमितौ चायमुत्तिष्ठति, शक्त्यभावात् फलञ्च न जायत इति लोकप्रतीतेरिष्टत्वात् ।

तथा च वैयाकरणनये—'यज्ञदत्तो गच्छति' इत्यत्र एकत्वविशिष्टयज्ञदत्ताभिन्नकर्तृकोत्तरदेशसंयोगानुकूलो वर्तमानकालिको व्यापारः इति शाब्दबोधः । मीमांसकनये फलमात्रं धात्वर्थो व्यापारस्तु तिङर्थः स च कर्त्ताऽक्षेपलभ्यः । तथा च कर्तृप्रकारकबोधम्प्रति तिङ्वाच्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावानुरोधात् पूर्वोक्तप्रकारकशाब्दबोधः ।

तार्किकमते कृतेस्तिङर्थत्वात् भावनाप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितेर्हेतुत्वाच्च उत्तरदेशसंयोगानुकूलकृतिमान् यज्ञदत्तः इति शाब्दबोधः।

(८) प्रश्नः—वैयाकरणनये तिङर्थं निरूप्य तत्रापतितं तार्किकादिमतं निरसनीयम्।

उत्तरम्—'लः कर्मणी'ति सूत्रेण लकाराणां कर्तरि कर्मणि च विधानात्, फलव्यापारौ धातुवाच्यौ, फलाश्रयः कर्म व्यापाराश्रयश्च कर्ता, कर्तृकर्मणोराश्रयः, 'आश्रये तु तिङः स्मृता' इत्युक्त्या तिङर्थं एव। तत्र अनन्यलभ्यो हि शब्दार्थं इति न्यायात् फलव्यापारयोर्धातुलभ्यत्वेन आश्रयमात्रं तिङर्थः। न चास्य तिङर्थत्वे आश्रयत्वं शक्यतावच्छेदकं वाच्यन्तस्य च स्वरूपतो भिन्नतया नानासम्बन्धावच्छिन्नतया च नानात्वेनानुगमः स्यादिति वाच्यम्, आश्रयत्वं च तत्तच्छक्तिविशेषरूपमिति द्वितीयार्थनिरूपणे वक्ष्यमाणत्वात्।

तथा चाखण्डोपाधिरूपस्यानुगतस्य तस्य स्वीकारान्न नानात्वदोषः। 'द्वयेकयोरि'त्यादिना 'वर्तमाने लडि'त्यादिना चैकवाक्यतायां संख्या कालश्च तिङर्थः। ननु 'यद्यद् बोधकं तत्तस्य वाचकमि'ति नियमादाख्यातजन्यकर्तृकर्मप्रतीतेर्लक्षणया सम्भवादनयोराख्यातार्थत्वं निष्प्रमाणमिति मीमांसकोक्तं युक्तमिति चेन्न, तस्याश्रयलक्षकत्वे त्वन्मते ततो भावनाबोधानुपपत्तेः, युगपद्वृत्तिद्वयविरोधात्। न च समभिव्याहृतचैत्रादिबोधकताशक्तिमादाय शसादिविधानवत् तिबादिनिष्ठां बोधकताशक्तिं लकारे प्रकल्प्य 'लः कर्मणी'त्यनुशासनेन तयोरर्थयोरेव विधानेन तद्विरोधापत्तेः। न चोक्तसूत्रे भावप्रधाननिर्देशेन कर्तृकर्मपदे, कर्तृकर्मत्वपरे तथा च प्रकृतिजन्यबोधे प्रकारीभूतो भाव इति न्यायात् कर्तृत्वं कृतिः कर्मत्वं च फलमेवार्थो लभ्यत इति वाच्यम्, फलव्यापारयोर्धातुलभ्यत्वात्।

पचति पाकं करोतीति विवरणात् फलमेव धात्वर्थः। तिङ्व्यापारवचने इति मीमांसकमतं युक्तमिति चेन्न, अर्थाधिकारानुरोधेन 'कर्तरि कृदि'ति सूत्रस्थकर्त्तरीति पदस्य (अलब्धलाभो योगं लब्धपरिरक्षणं क्षेममिति) तुल्ययोगक्षेमन्यायेन अन्यार्थबोधकत्वानुपपत्तेः।

अयं भावः 'लः कर्मणि' इति सूत्रे कर्त्तरि इत्यस्य भावना प्रतिपादकत्वे कृतामपि तद्वाचित्वापत्तिः, अथ तदनुरोधेन आश्रयत्वप्रतिपादकत्वकल्पने अत्रापि तदेवोचितमिति। न च शक्तिः कारकं शक्तिमत्कारकमिति पक्षद्वयस्य भाष्यसिद्धतया तिङ्कृतोर्व्यवस्थितत्वाश्रयणादर्थाधिकारेऽपि नोक्तदोषः इति वाच्यम्। 'घटमानये'त्यादौ गतिः पदार्थः इति मते, आक्षेपितव्यक्तेः प्रधानत्वमिव आक्षे-

पितभावनायाः प्राधान्यसम्भवेन तिङ्कृतोर्मीमांसकानामपि कर्तृवाचित्वस्यैवौचित्यात् । न च पचतीत्यस्य पाकं करोतीति भावनार्थक करोतिना विवरणदर्शनादाख्यातस्य भावना वाचित्वमिति वाच्यम्, पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशेषात्, विवरणस्य स्वस्वबोधानुसारित्वादिति दिक् ।

ननु कर्त्राक्षिप्तभावनाया कृदन्तेऽप्राधान्यवत् तिङन्तेऽप्राधान्यभिया आख्यातवाच्यत्वमावश्यकमिति चेत्सत्यम्, 'पक्ता देवदत्तः' इतिवत् 'पचति देवदत्तः' इत्यत्र अभेदान्वयदर्शनेन कर्तुर्वाच्यत्वस्यावश्यकत्वात् । 'सोमेन यजेत, स्तोकं पचति, राजपुरुषः गच्छति' इत्यादावभेदान्वयबोधदर्शनेन अभेदबोधे समानविभक्तिकत्वमिति नियमस्याप्रयोजकत्वात् । न च लक्षणया कर्तुरुक्तत्वात् सामानाधिकरण्यमिति वाच्यम्, 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्ये द्रव्यानुक्तेरारुण्यस्य कुत्रान्वयः ? इत्याशंक्य स्ववाक्योपात्ते द्रव्य एवान्वय इति अरुणाधिकरणोच्छेदापत्तेः । पिङ्गाक्ष्यादियौगिकानां द्रव्यवाचिसाधकस्य सामानाधिकरण्यस्य सम्बन्धि लक्षणयैवोपपत्तेरिति दिक् ।

**( ९ ) प्रश्नः—आख्यातस्य कर्तृकर्मशक्यत्वे पचतीत्यादावुभयबोधवारणप्रकारः प्रदर्शनीयः ।**

उत्तरम्—'लः कर्मणी'ति सूत्रेण लकाराणां कर्तरि कर्मणि च विधानात् तत्स्थानापन्नाख्यातस्य कर्तृकर्मणोः शक्यत्वे पचतीत्यादावुभयबोधः कुतो न । न च 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'ति न्यायान्नोभयबोध इति वाच्यम्, हर्यादिपदात् कदाचिदिन्द्रमात्रस्य कदाचिद्विष्ण्वादिमात्रस्य बोधोत्पादवत् कर्ममात्रस्यापि बोधापत्तेरिति चेन्न, सकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयचिण्यगादीनां कर्मद्योतकत्वस्वीकारात् । अत एव 'पच्यते ओदनः, क्रमादमुं नारद इत्यबोधी'त्यादौ यगादिसत्त्वेऽपि न दोषः इति ।

**( १० ) प्रश्नः—आख्यातार्थस्य कुत्रान्वयः ? इति सयुक्तिकमुपपाद्य विवदमानमतं खण्डय ।**

उत्तरम्—आख्यातवाच्याः कर्तृकर्मसंख्याकालादयस्तेषु कर्तृकर्मणी आश्रयतया धातुवाच्ययोः फलव्यापारयोः प्रकारौ, संख्या तु एकत्वादिप्रत्ययजन्योपस्थितिविषयत्वेन कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणि प्रकारतयाऽन्वेति ।

एवञ्च आख्यातार्थसंख्याप्रकारकबोधे विशेष्यतासम्बन्धेन आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः । नैयायिकास्तु एकपदोपात्तयोरेकार्थान्वयित्वस्य न्याय्यत्वात् आख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयः,

तथा च आख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिहेतुरित्याहुस्तन्न, 'चन्द्र इव मुखं दृश्यते' 'देवदत्तो भुक्त्वा व्रजति' इत्यादौ चन्द्रादेरपि प्रथमान्तार्थतया तत्राप्याख्यातार्थसंख्याया अन्वयापत्तिः। अतोऽन्यार्थनिष्ठप्रधानतानिरूपितप्रकारतानाश्रयत्वेन प्रथमान्तपदजन्योपस्थितेर्हेतुत्वस्वीकारे अतिगौरवम्।

अस्माकं तु चन्द्रक्त्वार्थयोस्तत्राख्यातार्थत्वविरहेणैवोक्तापत्त्यभावेन नोक्तनिवेशापेक्षेति लाघवम्। कालस्तु प्रत्ययार्थस्य साक्षात्प्रकृतिजन्यबोधविशेष्यान्वयित्वनियमात् व्यापारे विशेषणम्। न च समानप्रत्ययोपात्तत्वात्संख्यावत् कर्तृकर्मणोरेवान्वयः कुतो नेति वाच्यम्, अतीतभावनाके कर्तरि कर्तुर्विद्यमानत्वेन पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पचतीत्यनापत्तेश्च। न चैवमपि फलेऽन्वयः कुतो नेति वाच्यम्, फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्च।

न च कालस्य व्यापारान्वये आमवातजडीकृतकलेवरस्य उत्थानानुकूलयत्नरूपव्यापारस्य वर्त्तमानत्वेन विषयाबाधादुत्तिष्ठतीति प्रयोगापत्तिरिति वाच्यम्, परयत्नस्याज्ञानादप्रयोगात्, यत्किञ्चिच्छरीरावयवक्रियया यत्नानुमितौ तु— 'अयमुत्तिष्ठति शक्त्यभावात् फलन्तु न जायते' इति लोकप्रतीतेरिष्टत्वात्।

**( ११ ) प्रश्नः—धातोः फलव्यापारोभयवाचकत्वे 'क्रियते घटः स्वयमेवे'तिवत् 'ज्ञायते घटः स्वयमेवे'ति कथं न ?**

उत्तरम्—ननु कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचकत्वमावश्यकं, व्यापारमात्रवाचित्वे त्वकर्मतापत्तेः तथा च 'क्रियते घटः स्वयमेव' इतिवत् 'ज्ञायते घटः स्वयमेवे'ति प्रयोगः कुतो नेति चेन्न, कर्मस्थया क्रिययाऽयं कर्त्तारमुपमिमीते इति 'कर्मवत् कर्मणे'ति सूत्रस्थभाष्यात् कर्मणेत्युपादानसामर्थ्यात्, कर्ममात्रनिष्ठफलरूपकर्मस्थक्रिया लक्ष्यते, इति कैयटोक्त्या च निवर्त्त्यविकार्यकर्मणोः कर्मवद्भावो न तु प्राप्ये इत्यदोषात्। प्राप्यत्वञ्च— क्रियाकृत विशेषानुपलभ्यमानत्वम्। एवञ्च घटादेर्दृश्यादिधातुयोगे प्राप्यकर्मत्वान्न दोष इति दिक्।

**( १२ ) प्रश्नः—'देवदत्तस्तण्डुलं पचति' इत्यत्र शाब्दबोधो यथानियमं परमतखण्डनपुरस्सरं वैयाकरणसम्मतो दर्शनीयः।**

उत्तरम्—तत्र फलव्यापारौ धात्वर्थः, फलाश्रयः कर्म व्यापाराश्रयश्च कर्ता, कर्तृकर्मणोराश्रयस्तिङ् 'लः कर्मणि' इति सूत्रेण लकाराणां कर्तरि कर्मणि च

विधानात्, तिङश्च स्थान्याश्रयतया स्थान्यर्थस्यैव प्रत्यायकत्वात्। अतः कर्तृप्रत्ययसमभिव्याहारे आख्यातः कर्त्राश्रयः कर्मप्रत्ययसमभिव्याहारे कर्माश्रयश्च। तदाश्रयत्वेनैव कर्तृकर्मगतसंख्यायाः व्यापारगतकालस्य च वाचकत्वेन कर्तृकर्मसंख्याकाला आख्यातार्थः।

'देवदत्तस्तण्डुलं पचति' इत्यत्र देवदत्ताभिन्नैककर्तृक तण्डुलाभिन्नैककर्मक विक्लित्त्यनुकूलो वर्तमानकालिको व्यापारः, पचति इत्यत्र कर्तृप्रत्ययदर्शनात् व्यापारमुख्यविशेष्यकः शाब्दबोधः।

एवञ्च आख्यातार्थसंख्याप्रकारकबोधे विशेष्यतासम्बन्धेन आख्यातजन्यकर्तृकर्मणोरुपस्थितिर्हेतुरिति कार्यकारणभावः फलितः। नैयायिकास्तु फलव्यापारौ धात्वर्थः, आख्यातार्थः कृतिः प्रथमान्तार्थमुख्यविशेष्यकश्च शाब्दबोध इत्यामनन्ति। तेषां मते शाब्दबोधः तण्डुलाभिन्नं यदेकत्वं तदभिन्ना या विक्लित्तिस्तदनुकूलव्यापारानुकूलकृतिमान् देवदत्तः। परञ्च तादृशकार्यकारणस्वीकारे 'चन्द्र इव मुखं दृश्यते' 'देवदत्तो भुक्त्वा व्रजति' इत्यादौ चन्द्रादेरपि प्रथमान्तार्थतया तत्राप्याख्यातार्थसंख्याया अन्वयापत्तिः। एवञ्च 'पश्य मृगो धावति' इत्यादौ कर्मत्वापत्तिः प्रथमान्तसामानाधिकरण्ये शतृप्रत्ययापत्तिश्च। अतोऽस्माकमेव मतं ज्यायः इति।

० (१३) प्रश्नः—'फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः' इति कारिका संप्रसङ्गं व्याख्येया।

उत्तरम्—कर्तृकर्मणोराख्यातार्थबोधकत्वे पचतीत्यत्रोभयबोधापत्तिः। ननु 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इतिरीत्या कर्तृमात्रस्य बोधक इति चेन्न, कर्तृमात्रबोधवत् कर्ममात्रस्यापि बोधापत्तेः। तन्निवारयन्नाह—

'फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्॥'

कर्मप्रत्ययसमभिव्याहारे फलमुख्यविशेष्यकः शाब्दबोधो भवति। व्यापारस्तु प्रकारतया फले विशेषणम्। तङ्यक्चिणादयः कर्मवाचकाः प्रत्ययास्तेषामाश्रयतया फलेऽन्वयः। अतस्ते फलेऽन्वयद्योतकाः फलान्वयाश्रयस्य कर्मत्वात् कर्मद्योतकाः। द्योतकतारूपा या व्यञ्जनाशक्तिः तया कर्मप्रतिपादकाः। द्योतकत्वञ्च—स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम् इति। एवमेव कर्तृप्रत्यया शप्श्नमाद्यास्तु व्यापारे आश्रयतयाऽन्वयद्योतकाः। व्यापारान्वयाश्रयस्य कर्तृत्वात् व्यापारान्वयद्योतकाः कर्तृद्योतकाः। अतस्तङादिकर्मप्रत्ययसमभि-

व्याहारे कर्मार्थस्यैव, शप्श्नमादि कर्तृप्रत्ययसमभिव्याहारे कर्त्रर्थस्यैव बोधः, तत्तत्प्रत्ययसमभिव्याहारे आश्रयतया तत्तदर्थस्यैव द्योतकत्वात्। तथा सति 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ फलान्वयाश्रयद्योतकस्य चिणः समभिव्याहारे कर्मद्योतकत्वमस्तु। 'पच्यते ओदनः स्वयमेव' इत्यत्रापि तङ्यक्समभिव्याहारे कर्मद्योतकत्वमस्तु चेन्न, 'क्रमादमुं नारद इत्यबोधि सः' इत्यत्र कर्त्तरि लुङ् 'दीपजन' इत्यनेन च्लेश्चिण्, कर्मविषयत्वाभावात्तदर्थः प्रयोजकत्वात्। 'पच्यते ओदनः स्वयमेव' इत्यत्र कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्तुरेव बोधात्।

**(१४) प्रश्नः—'किन्तूत्पादनमेवातः कर्मवत् स्याद् यगाद्यपि' कारिकेयं सावतरणं व्याख्येया।**

उत्तरम्—उक्तरीत्या धातूनां फलव्यापारोभयवाचकत्वादेव कृञ्धातोरर्थः, उत्पादनम्—उत्पत्तिरूपफलसहितं यत्नादि, न तु यत्नमात्रार्थः। अतः कर्मवत् स्यात्—'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रेण कर्तुः कर्मवद्भावो भवति। 'पच्यते ओदनः स्वयमेवे'तिवत् 'क्रियते घटः स्वयमेवे'त्यादावपि यगादयोऽप्युपपद्यन्ते। यत्नमात्रार्थत्वस्वीकारे तु दृशेरिव कर्मकर्त्तरि यगादयो न स्युः। यत्नस्य कर्मनिष्ठत्वाभावात्। अतः पूर्वोक्तं सकर्मकत्वं सुगमतयोपपद्यते, कर्मणि लकारश्चोपपद्यते। 'क्रियते घटः' इत्यादौ तेषामुत्पत्त्यादिरूपव्यापारव्यधिकरणफलाश्रयत्वेन कर्मत्वात्।

**(१५) प्रश्नः—'निर्वर्त्त्ये च विकार्ये च कर्मवद्भाव इष्यते' कारिकेयं सावतरणं व्याख्येया।**

उत्तरम्—कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफलवाचित्वात् 'क्रियते घटः स्वयमेवे'तिवत्, 'ज्ञायते घटः स्वयमेव' 'ग्रामो गम्यते स्वयमेव' कथन्नेति तदुत्तरन्नाह—'निर्वर्त्त्ये च विकार्ये च कर्मवद्भाव इष्यते' इति। त्रिविधं हीप्सितकर्म—निर्वर्त्त्यं, विकार्यं प्राप्यञ्च। तत्राद्ययोः=निर्वर्त्त्ये विकार्ये च कर्मवद्भावो भवति नान्त्ये प्राप्ये। प्राप्ये—क्रियाकृतविशेषानुपलभ्यमानत्वात्। निर्वर्त्त्ये—'क्रियते घटः स्वयमेवे'त्यत्र घटस्योत्पत्तिरूपफलाश्रयत्ववदावरणभङ्गरूप फलाश्रयत्वस्य सत्त्वात्। 'अयं घटः केनचिद् दृष्टः, अयं ग्रामः केनचिद् गत' इति कर्मदर्शनेनावगन्तुं न शक्यते। 'घटं करोती'ति निर्वर्त्त्ये 'सोमं सुनोति' इति विकार्ये च तत्तत्कर्मदर्शनेनापि क्रियाकृतवैलक्षण्यं दृश्यते। अत्र

मानं हि—'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रभाष्यम्। तत्र हि 'धातोरेकाच०' इति सूत्रादनुवर्त्तमानधातुग्रहणेन धातुवाच्यक्रियया इत्यर्थलाभेन 'साध्वसिश्छिनत्ति' 'स्थाली पचति' इत्यादौ करणाधिकरणाभ्यां तुल्यक्रिये कर्त्तरि वस्तुतः सतोऽपि व्यापारस्य धातुवाच्यत्वाभावादेवानतिप्रसङ्गे कर्मग्रहणमतिरिच्यमानं कर्मस्थक्रियां लक्षयतीति सिद्धान्तः। कर्मस्थक्रियात्वञ्च प्राप्यभिन्नकर्मण्येव सम्भवतीत्याह—'निर्वर्त्ये च विकार्ये चे'ति दिक्।

( १६ ) प्रश्नः—धात्वर्थभावनायाः प्राधान्यमाक्षेपनिरसनपूर्वकं स्थापनीयम्।

उत्तरम्—ननु 'पक्ता देवदत्त' इत्यत्रैव 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यमि'ति न्यायादाख्यातार्थप्राधान्यं युक्तमिति चेन्न, भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि अपवादभूतेन यास्कवचेन 'पचति भवती'त्यादौ पचादिक्रियायाः भवतिक्रियायाः कर्त्र्यो भवन्तीति क्रियाप्राधान्यबोधकभाष्येण च धात्वर्थभावना प्राधान्योपगमात्। किञ्च आख्यातार्थप्राधान्ये तस्य देवदत्तादिनाऽभेदान्वये प्रथमान्तस्य प्राधान्यापत्तौ 'पश्य मृगो धावती'त्यत्र भाष्यसिद्धैकवाक्यत्वानुपपत्तिः, एकविशेष्यकबोधजनकवाक्यत्वस्यैवैकवाक्यत्वात्। ननु धावनानुकूलकृतिमन्मृगकर्मकदर्शनानुकूलव्यापारानुकूलकृतिमांस्त्वमिति बोधे नोक्तदोष इति चेन्न, मृगशब्दाद् द्वितीयापत्त्याऽप्रथमान्तसामानाधिकरण्ये शत्रापत्त्या उक्तप्रयोगस्यैवानापत्तेः। न च पश्येत्यत्र तमिति कर्माध्याहारेण नोक्तदोष इति वाच्यम्, एवमपि वाक्यभेदस्य तादवस्थ्यात्। न चार्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति जैमिनिसूत्रात् तमित्युक्ते कमित्याकाङ्क्षासत्त्वाद्यथाकथञ्चिद् वाक्यद्वयस्य धावनानुकूलकृतिमन्मृगकर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च, न वाक्यभेदप्रसङ्ग इति वाच्यम्, उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मकतयाऽन्वयो वक्तुरभिमत इत्यध्याहारेऽनन्वयापत्तेः। ततश्च भावनाप्रकारबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति तार्किकोक्तं परास्तम्, किन्तु आख्यातार्थकर्तृप्रकारबोधे भावनात्वावच्छिन्नविषयकधातुजन्योपस्थितिः कारणमिति कार्यकारणभावो बोध्यः। 'पश्य मृगो धावति' 'पचति भवति' इत्याद्यनुरोधात् तु भावना प्रकारबोधं प्रति कृज्जन्योपस्थितिवद् धात्वर्थभावनोपस्थितिरपि हेतुरिति दिक्।

( १७ ) प्रश्नः—कर्त्राख्याते कर्माख्याते च प्राच्यनव्ययोर्मतमुद्वर्ण्यताम्।

उत्तरम्—आख्यातार्थकर्तृप्रकारकबोधे विशेष्यतया धात्वर्थभावनोपस्थिते-र्हेतुत्वमिति कार्यकारणभावबलाद् 'देवदत्तः पचती'त्यतो देवदत्ताभिन्नाश्रयिका पाकानुकूला भावनेति बोधः ।

आख्यातार्थकर्मप्रकारकबोधे विशेष्यतासम्बन्धेन धात्वर्थफलोपस्थिते-र्हेतुत्वमिति बलात् 'पच्यत' इत्यत ओदनाभिन्नाश्रया या विक्लित्तिस्तदनुकूला भावनेति प्राचां पन्थाः । नव्यास्तु—कर्मकृतिफलविशेष्यकबोधस्य दृष्टतया कर्माख्यातेऽपि फलविशेष्यकबोध एव न्याय्यः । एवञ्च भावनाजन्यैकाश्रयिका वर्तमानविक्लत्तिरित्येव बोधः । अत एव 'इष्यते पुत्र' इत्यर्थे 'पुत्रीयती'ति न भिन्नार्थत्वादिति भाष्यं सङ्गच्छते ।

अस्मन्मते तु एकत्र व्यापारो विशेष्योऽन्यत्र इच्छारूपं फलमिति भिन्नार्थ-कत्वं स्पष्टम् । क्यजन्ताद् कर्मणि प्रत्ययस्तु न अकर्मकत्वादित्याहुरिति ।

अकर्मकधातोरपि फलव्यापारोभयार्थकत्वं सर्वैः स्वीकार्यमिति सूचयन्नाह—'घटो नश्यती'ति । जानातीत्यादेर्ज्ञानमात्रार्थकत्वे सकर्मकत्वानुपपत्तिं सूच-यन्नाह—'देवदत्तो जानाती'त्यादि । अन्ततः—व्यापारान्तरानुपस्थितौ । आश्रयताया अनवयवत्वेऽपि सावयवत्वारोपाद् व्यापारत्वम् ।

**( १८ ) प्रश्नः—भावनाया धात्ववाच्यत्वमिति वदतां प्राभाकरा-दीनां मतं वैयाकरणसिद्धान्तेन निरस्यताम् ।**

उत्तरम् —ननु न भावना धातुवाच्या 'प्रकृतिप्रत्ययौ सहार्थं ब्रूत' इति न्यायेन तस्या अप्राधान्यापत्तेरतः सा प्रत्ययवाच्यैवेति प्राभाकरमतं युक्तमिति चेन्न, पचतीत्यस्य पाकमुत्पादयति पाकानुकूला भावना पाकानुकूला उत्पादनेति विवरणात् । विव्रियमाणस्य विवरणसमानार्थकत्वेन धातोर्भावनावाचकत्व-सिद्धेः ।

किञ्च 'घटं भावयती'त्यत्रेव 'घटो भवती'त्यत्रापि धात्वर्थोत्पत्तिरूपफला-श्रयत्वेन घटस्य कर्मतापत्तौ द्वितीयापत्तेः। न च धात्वर्थफलान्विताख्यातार्थ-व्यापाराश्रयत्वरूपकर्तृत्वस्य घटे सत्त्वात् कर्मत्वबोध इति वाच्यम्, धात्वर्था-नुकूलयत्किञ्चिद्व्यापाराश्रयत्वस्य कारकमात्रे सत्त्वेन सर्वेषां कर्तृत्वापत्तेः क्रियाजनकस्यैव कारकत्वात् । मम तु धातूपात्तव्यापाराश्रयस्य कर्तृत्वान्न दोषः । न च कृत्याश्रयत्वं यद्वा कारकचक्रप्रयोक्तृत्वं कर्तृत्वमिति नैयायिक-रीतिः साध्वीति वाच्यम्, अचेतने घटादावुक्तकर्तृत्वासम्भवात् । न च इतरान-धीनत्वरूपकर्तृत्वस्य 'स्वतन्त्रः कर्त्ते'ति सूत्रभाष्यसिद्धस्य ग्रहणान्नोक्त दोष

इति वाच्यम्, एवमपि स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापार-व्यधिकरणफलवाचकत्वं वा सकर्मकत्वमित्युच्छेदापत्तेः। न च पच्यादीन् सकर्मकधातून् शृङ्गग्राहिकयोपादाय एतद्भिन्न भिन्नत्वं सकर्मकत्वमिति वाच्यम्, एकस्यैव जिधातोरभिभवार्थेऽकर्मकत्वस्य न्यूनीकरणार्थे सकर्मकत्वस्य च दर्शने नोक्तानुगमस्याप्रयोजकत्वादिति दिक्।

(१९) प्रश्नः—धातूनां फलावाचकत्वे त्यजिगम्योः पर्यायतापत्ति-दोषो निवार्यताम्।

उत्तरम्—ननु त्यजिगम्योः क्रमेण विभागसंयोगोपलक्षितव्यापारार्थकत्वे पर्यायतापत्तिः स्यादिति चेन्न, पर्यायलक्षणे तदुपलक्षणेतरानुपलक्षितत्वस्यापि विशेषणात्। उपलक्षणत्वञ्च—तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वे सति शक्तिविषयत्वम्। तथा च संयोगविभागयोः स्वार्थव्यापारजन्यत्वाविशेषाद् गम्यर्थव्यापारे संयोग एवोपलक्षणं, नो विभाग इत्यत्र विनिगमकाभावादुभय-स्यैवोपलक्षणत्वे उक्तापत्तिर्दुर्वारा स्यात्। तदापत्तिवारणाय धातूनां फलेऽपि शक्तिरावश्यकीति भावः। अतः स्वार्थफलव्यधिकरणव्यापारवाचकानां सकर्मकधातूनां फलवाचकत्वमावश्यकमिति। स्वार्थफलसमानाधिकरणव्यापार-वाचकानामकर्मकधातूनान्तु निर्विवादमेव, तत्र फलवाचकत्वं विनाऽनुपपन्न-त्वादिति दिक्।

(२०) प्रश्नः—'तस्मात् करोतिर्धातोः स्याद् व्याख्यानं न त्वसौ तिङाम्' इति कारिका सावतरण व्याख्येया।

उत्तरम् - ननु प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायबलात् यः प्रत्ययार्थः स प्रधानमित्यर्थकस्तदागमे हि दृश्यते इति न्यायाच्च तिङ्वाच्यैव भावना। नापि सकर्मकत्वव्यवहारानुपपत्तिः, स्वयुक्ताख्यातार्थव्यापारव्यधिकरण-फलवाचकत्वमिति स्वीकारात्। 'घटो भवती'त्यत्र न घटपदाद् द्वितीयापत्तिः। आख्यातार्थव्यापाराश्रयत्वेन घटस्य कर्तृत्वादिति मीमांसकोक्तं युक्तमिति चेन्न, गमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वात् 'ग्रामः संयोगवानि'तिवद् 'ग्रामो गमनवानि'ति प्रयोगस्य प्रामाण्यापत्तेः। फलानुत्पाददशायां व्यापारसत्त्वे पाको भवति' इति प्रयोगानुपपत्तेश्च विक्लित्तेरवर्तमानत्वात्। न च भावविहित ल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधान्नोक्त दोष इति वाच्यम्, 'लः कर्मणी'ति विहितकर्त्राख्यातस्य तन्मते [illegible]र्थकत्ववत् 'कर्तरि कृदि'ति विहितघञा-दीनामपि व्यापारार्थकत्वसम्भवाद 'भावे' इति सूत्रवैयर्थ्यापत्तेः। पचतीत्यस्य

पाकं करोतीति व्याख्यानमपि धातोरेव। किञ्च प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन तदुत्तरप्रत्ययजन्योपस्थितिहेतुरिति कार्यकारणभाव-मूलकप्रकृतिप्रत्ययाविति न्यायस्य पक्ववानित्यत्र पाकः कर्मकारकं, क्तवतु प्रत्ययार्थः कर्तृकारकं, तयोश्चारुणाधिकरणोक्तरीत्या क्रियात्वमेव नहि कारकान्वयितावच्छेदकमिति सिद्धान्तेन चान्वयाभावाद् व्यभिचारः।

न च सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते इति भट्टपादोक्तदिशा पाकसम्बन्धि कर्त्तेति बोधस्वीकारान्न व्यभिचार इति वाच्यम्, क्रियात्वाभावेन योग्यताविरहात्। अपि च यः प्रधानं स प्रत्ययार्थः, यः प्रत्ययार्थः स प्रधानमेवेति नार्थः, अजेत्यादौ प्रत्ययार्थ-स्त्रीत्वस्य प्राधान्यापत्तेः। अतो विशेष्यत्वादिना बोधो व्युत्पत्तिमूलको मन्तव्यः। किञ्च किं कृतम्? पक्वमित्यत्र क्ञा विवरणम्। प्रतीतिश्च पक्वमित्यत्रापि भवति तत्रापि भावना वाच्या। नहि तिङ इव कृद्वाच्या भावना, प्रकृति-प्रत्ययाविति न्यायेन कृदन्ते भावनाविशेष्यकबोधापत्तेरिति दिक्।

**( २१ ) प्रश्नः—फलमात्रं धात्वर्थो व्यापारश्चाख्यातार्थ इति वदतां मीमांसकानां मतमनूद्य खण्डय।**

उत्तरम्—ननु 'व्यापारो भावना सैव' इत्युक्तविवरणेन न व्यापारस्य धात्वर्थतानिर्णयः। पचति इत्यत्र पाकं करोतीति विवरणेन आख्यातार्थताया अपि वक्तुं शक्यत्वादिति। एवञ्च 'प्रकृतिप्रत्ययार्थौ ब्रूतः प्रत्ययार्थस्यैव प्राधान्य-मि'ति न्यायविरुद्धत्वात्। तत्र हि यः प्रधानं स प्रत्ययार्थः, यः प्रत्ययार्थः स प्रधानमिति। तथा च 'पशुना यजेत' इत्यत्र पश्वेकत्वोभयकरणको याग इति बोधेनैकत्वस्य यागाङ्गत्वाऽवगमान्नानेकपशुभिर्याग इति तद्भावः। प्रकृते च आख्याताऽसमवधाने भावनाऽबोधात् तस्याप्राधान्येन भानमिति तत्सङ्गतिरिति बोध्यम्। तथा चाऽऽरूढे पाके फलानुत्पत्तिदशायां पाको जातो न वेति प्रश्ने, पाको भविष्यतीत्युत्तरानुरोधात् फलमात्रं धात्वर्थ इति मीमांसकाशयः। एवञ्च 'स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्। आख्यातार्थ-व्यापाराश्रयत्वञ्च कर्तृत्वमिति वदन्ति।

तन्मतं दूषयन्नाह—'तस्मात् करोतिर्धातोः स्याद् व्याख्यानं न त्वसौ तिङाम्।' फलमात्रस्य धात्वर्थत्वे भावल्युडन्त गमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वाद् 'ग्रामःसंयोगवानि'तिवद् 'ग्रामो गमनवानि'ति प्रयोगस्य प्रामाण्यापत्तेः। विक्लित्तिरूपफलानुत्पाददशायामपि व्यापारसत्त्वे पाको भवति, इति प्रयोगः,

पाकपदार्थस्य विक्लित्तेरवर्तमानत्वाद् भवति। फलमात्रार्थकत्वे तदनापत्तेश्च। ननु भावविहितल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधान्न पूर्वोक्तप्रयोगापत्तिश्चेन्न, 'कर्तरि कृद्' इति विहितस्य कृतः, पक्ता, पाचक इत्यादौ कर्त्रर्थत्वदर्शनात्तद्विहितघञादीनां व्यापारार्थत्वदौर्लभ्यात्।

पचति इत्यस्य पाकं करोति व्याख्यानमपि करोतेरेव नाख्यातार्थस्तद्व्याख्यानस्याख्यातार्थत्वस्वीकारे किं करोति? पचति, किं कृतम्? पक्वम्, किं कृत-वान्? पक्ववान् इत्यादौ करोतिना सामानाधिकरण्यं न स्यात्। तेन विवरणमपि धातोरेव इति स्पष्टमेव बोध्यते। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्' इत्यत्र तयोः प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थः प्रत्ययवृत्तिग्रहविशेष्यः प्रधानमिति प्रकृत्यर्थप्रकारतानिरूपितविशेष्यताशाली शाब्दबोधः, प्रत्ययस्य प्रकृत्यर्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति हेतुत्वात्। तथा च 'पक्ववान्' इत्यत्र पाकः कर्मकारकं क्तवतुप्रत्ययार्थः कर्तृकारकम् इत्यनयोश्चारुणाधिकरणोक्तदिशाऽन्वयमाशङ्क्य—

'सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते॥'

'अतः क्रियान्वयित्वमेव हि कारकान्वयितावच्छेदकमिति।

( २२ ) प्रश्नः—'किं कार्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि' कारिकेयं सावतरणं व्याख्येया।

उत्तरम्—धातूनां व्यापारावाचकत्वे 'कार्यो घट' इत्यादौ कर्मादिसंज्ञानां कारकेऽप्यधिकृत्य विहितानां घटादावसम्भवेन कर्मादौ विहितण्यदाद्यनुपपत्तिः न चालं श्रमेणेतिवत् गम्यमानक्रियामादाय नोक्तदोष इति वाच्यम्, आख्यातेऽपि गम्यमानक्रियामादायैव कर्तृकर्मार्थकप्रत्ययोपपत्तौ तिङ्वाच्या भावनेति भवात्सिद्धान्तासङ्गतेः। न च लिङ्ग-संख्यान्वयानुरोधात् कृतः कर्तृवाचित्वमावश्यकम्। तेन भावनाया आक्षेपात् तत्प्रतीतिस्स्यादिति वाच्यं, संख्यान्वयोपपत्तये तिङन्तेऽपि तथा वक्तुं शक्यत्वात्। पक्ववानित्यत्र कालकारकान्वयानुरोधाद् भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्च। किञ्च 'पुरुषो राज्ञो भार्या देवदत्तस्ये'तिवद् 'हरिणा त्रातः हरित्रात' इत्यत्रासामर्थ्यात् समासो न स्यात्। न च दध्योदन इत्यादाविवाध्याहृतक्रियाद्वारा सामर्थ्यमादाय समासः स्यादिति वाच्यम्, सूत्रारम्भसामर्थ्यादगत्या तत्र तथा स्वीकारेऽपि 'हरिकृतम्' इत्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य कर्तृकरणे इत्यस्य स्वकर्तृकादि क्रियाजन्यत्व-

रूपपरम्परासम्बन्धे प्रवृत्त्यसम्भवात्। एकक्रियान्वयित्वरूपसामर्थ्याश्रयणे तु असूर्यम्पश्येत्यादेरसमर्थसमासत्वानुपपत्तिरिष्टापत्तिस्तु न 'सह सुपे'ति शास्त्रेण कृतः सर्वो मृत्तिकयेत्यत्र कृतसर्वमृत्तिक इत्यापत्तेः। किञ्च 'भावयति घटमि'ति-वद् 'भवति घटमि'ति प्रयोगापत्तिः फलाश्रयत्वेन कर्मत्वात्। न चाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात् परया कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न दोष इति वाच्यम्, तादृशकर्तृत्वाङ्गीकारे 'पाचयति देवदत्तो विष्णुमित्रेणे'त्यत्र विष्णुमित्रस्य कर्तृत्वाभावेन तृतीयानापत्तेः, 'ग्रामं गमयति देवदत्तो विष्णुमित्र'मित्यत्र प्रयोज्यस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मत्वानापत्तेश्च। किञ्चाख्यातार्थव्यापाराश्रयत्वस्य केवलान्वयितया तस्मिन् प्रयोगे य आख्यातार्थं इत्यस्यावश्यकत्वेनाख्यातशून्ये 'देवदत्तः पक्ते'त्यादौ देवदत्तस्याकर्तृतापत्तेश्च। किञ्च धातोर्व्यापारवाचित्वाभावे क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमित्यर्थक 'भूवादयो धातवः' इति सूत्रवैयर्थ्यापत्तिरिति दिक्।

० (२३) प्रश्नः—धातुसंज्ञाविधायकसूत्रे क्रियापदेन कस्य ग्रहणमिति साधूपपाद्यताम्। (२८ना)

उत्तरम्—ननु क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमित्येव लक्षणमस्तु, क्रियापदेन फलमात्रस्य ग्रहणान्न भूवादय वैयर्थ्यमिति चेन्न, यदि क्रियात्वं धात्वर्थत्वमेव स्वीक्रियते तदा धातुत्वज्ञाने तदर्थत्वरूपक्रियात्वज्ञानमपेक्षितम्। क्रियात्वज्ञाने च तदवच्छिन्नवाचकत्वघटितधातुत्वज्ञानमित्यन्योऽन्याश्रयापत्तेः। न च अन्यतमत्वं (अर्थात् भ्वादिभिन्नभिन्नत्वं) धातुत्वमिति स्वीकारोन्नोक्तदोष इति वाच्यम्, 'भूवादयः' इत्यस्य वैयर्थ्यापत्तेः। न च सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वमिति स्वीकारान्न दोष इति वाच्यम्, विकल्पयतीति प्रयोगानुसारादन्यतममध्ये विकल्पस्यापि प्रवेशावश्यकत्वेन तदर्थके वेत्यव्ययेऽतिव्याप्तेः। तथा च व्यापारसन्तानः क्रिया तद्वाचकत्वे सति गणपठितत्वं धातुत्वम्। न चास्तीत्यादौ क्रियाप्रतीत्यभावात् कथं धातुसंज्ञेति वाच्यम्, स ततो गतो न वेति प्रश्ने महता यत्नेन अस्तीति प्रयोगे सत्तारूपफलानुकूलभावनाया प्रतीतिसत्त्वात्, 'रोहितो लोहितादासीदि'ति प्रयोगादौ च दर्शनात्।

किञ्च क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिकेति नियमाद् भावनाविरहे लडादिव्यवस्थानुपपत्तिः। भावनायाः फलसामानाधिकरण्यादस्तीत्यादौ स्पष्टतया न क्रियाया प्रतीतिरिति दिक्।

( २४ ) प्रश्नः—सर्वेषां भावनावाचकस्य फलवाचकत्वव्याप्यत्वात् सकर्मकतापत्तिदोषो निवार्यताम् ।

उत्तरम्—'फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्द्धर्मिभेदे सकर्मक उदाहृतः' ॥ इति सिद्धान्तेन फलव्यापारयोः एकैतरावृत्तित्वे सति एककारकाणां साध्यस्वभावक्रियान्वयित्वनियमेन घञन्तेन सिद्धभावस्यैवाभिधाने, ओदनस्य कारकत्वानुपपत्त्या कर्मषष्ठ्यानुपपत्तेः । न च साध्यस्वभावाध्याहृतभवत्यर्थस्य परम्परान्वयात् षष्ठीति वाच्यम्, कृदन्तेन योग एव 'कर्तृकर्मणोरि'त्यनेन षष्ठीविधानात्, तिङ्योगे 'न लोके'ति निषेधाच्च । एवमुक्तरीत्या 'काष्ठैः पाकः' इत्यादौ करणतृतीयासिद्धिः । एवं घञन्ते धातुना फलमपि असत्त्वावस्थापन्नमेवोच्यते, तेन 'स्तोकं पचती'तिवत् 'स्तोकं पाकः' इति सिद्धः । षष्ठी तु नात्र शङ्क्या, कर्तृसाहचर्येण भेदान्वयिन एव कर्मणस्तत्र ग्रहणात् । अत एव—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्या सघञादिनिबन्धनः ॥'

इति कारिका सङ्गच्छते इति दिक् ।

( २५ ) प्रश्नः—असत्त्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्र प्रतीति अभावे प्रमाणमुपपाद्यताम् ।

उत्तरम्—ननु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मविशिष्टायाः असत्त्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रतीतिः, इष्टापत्तिः स्यादिति चेन्न, 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति भाष्यविरोधात् । एतदेवाभिप्रेत्याह—'आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता' इति, तेन 'पश्य मृगो धावती'त्यादौ तिङन्ताभ्यां यथा साध्यत्वेन साधनत्वेन च प्रतीतिर्भवति, तथा पाक इत्यत्र प्रकृत्या साध्यावस्थायाः प्रत्ययेन च साधनावस्थायाः प्रतीतिः । न चानयोर्लिङ्गसंख्यान्वयित्वानन्वयित्वेन वैषम्यात् कथं दृष्टान्तदार्ष्टान्तिकभाव इति वाच्यम्, कारकत्वेनान्वयित्वमात्रेण सादृश्यविवक्षणात् । साध्यत्वञ्च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्, कारकत्वेनान्वयित्वे सति साधनभूतत्वं वा न च पाक इत्यादौ धातुना साध्यावस्थायाः क्रियाया अभिधाने प्रमाणाभाव इति वाच्यम्, 'तण्डुलस्य पाकः' इत्यत्र कर्मषष्ठ्या एव मानत्वात् कारकाणां साध्यस्वभावक्रियान्वयनियमेनौदनस्याकारकतयाऽकर्मकत्वेन षष्ठ्यनुपपत्तेः । न चाध्याहृततिङन्तक्रियान्वयात् षष्ठी भविष्यतीति वाच्यम्, 'कर्तृकर्मणोरि'त्यनेन कृदन्तयोगे एव तद्विधानान्न लोकेति लादेशयोगे षष्ठीनिषे-

धाच्च । अत एव 'काष्ठैः पाकः' इति प्रयोगापत्तिः । धातुवाच्यफलांशस्यापि भानमसत्त्वरूपेणैव । तेन 'स्तोकं पाकः' इति सिद्ध्यति इति दिक् ।

( २६ ) प्रश्नः—'फलव्यापारयोरेकनिष्ठतायामकर्मकः' इति कारिका सावतरणं व्याख्येया ।

उत्तरम्—नन्वेवं भावनावाचकत्वस्य फलवाचकत्वव्याप्यत्वाद्, फलव्यापारोभयवाचकस्य पच्यादेः सकर्मकत्वदर्शनाच्च अस्त्याद्यकर्मकाणां व्यापारार्थकत्वे सकर्मकतापत्तिः ।

तद्दोषं निराचष्टे—फलव्यापारयोरिति । फलव्यापारयोरेकनिष्ठतायां धातुरकर्मकः । नन्वेवं सति गम्यादिधात्वर्थसंयोगादिफलस्य तदनुकूलव्यापारस्य चैककर्तृवृत्तित्वादकर्मकतापत्तिः स्यादतो व्याचष्टे । एकनिष्ठतायामित्यस्यैकमात्रनिष्ठतायामिति । एकमात्रनिष्ठत्वञ्च एकेतरावृत्तित्वे सति एकवृत्तित्वम् । तथा च स्वार्थव्यापारानधिकरणवृत्तिफलवाचकत्वमकर्मकत्वमिति ।

तयोः फलव्यापारयोः धर्मिभेदे आश्रयभेदे सकर्मकः, तथा च स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वम् । अत्रार्थे हरिसम्मतिमाह—'आत्मानमात्मनेति' । आत्मानं=स्वस्वरूपं, बिभ्रत्=धारयत्, एतेन स्वस्वरूपधारणानुकूलो व्यापारो धात्वर्थ इति लब्धम् ।

नन्वेवमात्मानं धत्ते इतिवदात्मानमस्ति इत्यपि प्रयोगोऽविशेषात् स्यादत आह—अन्तर्भावात्=धात्वर्थतावच्छेदकशरीरे कर्मणः प्रवेशादित्यर्थः । तथा च सकर्मकपदस्य कर्मणा सह वर्तते, सकर्मकः कर्मान्वय्यर्थप्रतिपादक इत्यर्थः । तथा सति 'आत्मानं जानाति' इत्यादौ स्वार्थव्यापारानधिकरणावृत्तिफलवाचकत्वाद् अकर्मकतापत्तिरत आह—आत्मा=अन्तःकरणावच्छिन्नात्मा, आत्मानं=शरीरावच्छिन्नात्मानं जानाति इत्यर्थे स्वार्थफलव्यधिकरणव्यापारवाचकत्वसत्त्वान्न दोष इति ।

( २७ ) प्रश्नः—घञादिभिः सिद्धत्वेनाभिधाने किं प्रमाणम् ?

उत्तरम्—ननु घञादिभिः सिद्धावस्थायाः क्रियायाः प्रतीतौ न किञ्चिन्मानमिति चेन्न, पाक इत्युक्ते भवति नष्टो वेति आकाङ्क्षादर्शनस्यैव मानत्वात्, 'स्तोकः पाकः' इत्यनुरोधाच्च । एवञ्च धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया घञर्थान्वये प्रथमा पुंल्लिङ्गता चेति तदर्थं घञि शक्तिः स्वीकार्या । न च घञन्तशक्त्युपस्थाप्यान्वये 'स्तोकः पाकः' इति सेत्स्यतीति वाच्यम् । घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवात् । न च वृत्तिमात्रे समुदायशक्तिरिति सिद्धा-

न्तासङ्गतिरिति वाच्यम्, समुदायशक्तिस्वीकारस्यावश्यकत्वेऽपि 'कर्तरि कृदि'त्यनुशासनानुरोधात् घञ्यपि शक्तेरावश्यकत्वात् ।

अत एव 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यं सङ्गच्छते इति दिक् ।

( २८ ) प्रश्नः—'साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धने'ति कारिका सप्रसङ्गं व्याख्येया ।

उत्तरम्—ननु साध्यावस्थफलाश्रयस्यैव कर्मत्वेन तत्समानाधिकरणात् 'स्तोकं पाकः' इत्यत्रापि स्तोकपदाद् द्वितीयापत्तिः क्रियाविशेषणानां कर्मत्वमिति प्रवादश्च सङ्गच्छते । तस्मिन्नर्थे सकर्मकाकर्मकसाधारण्येन ज्ञापकमस्तु, तदर्थमाह—साध्यत्वेनेति । यत्र साध्यत्वरूपेण क्रिया तत्रैव धातुरूपनिबन्धना धातुस्वरूपप्रतिपादिका । साध्यत्वञ्च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् । अत्र 'स्तोकं पचति' इत्यादौ धातुस्वरूपप्रतिपादिकत्वात् प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयस्य स्तोकपदस्य कर्मत्वम् । 'स्तोकः पाकः' इत्यादौ तु सिद्धाक्रिया, सिद्धत्वञ्च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् । तेन रूपेणोपस्थितक्रियाया धातुत्वायोगात् । घञादिनिबन्धनत्वान्न स्तोकादिपदाद् द्वितीयेति । अपितु घञर्थान्वये प्रथमा पुंल्लिङ्गता च सिद्धयति ।

( २९ ) प्रश्नः—कारकाणां भावनायामेवान्वयः सिद्धान्तो ग्रन्थरीत्या प्रतिपाद्यताम् ।

उत्तरम्—ननु 'तण्डुलस्य पाकः' इत्यादौ कर्मषष्ठ्यनुसारेण भावनाया धातुवाच्यत्वसिद्धावपि कारकाणां भावनान्वय इत्यत्र किं मानमित्याशयेनाह—सम्बोधनान्तं कृत्वोऽर्था इत्यादि । अयमाशयः—सम्बोधनान्तस्य क्रियायामन्वयः 'त्वं ब्रूहि देवदत्त' इत्यादौ निघातानुरोधात् । अन्यथा आख्यातं सविशेषणं वाक्यमिति समर्थसूत्रस्थभाष्यानुरोधात् साक्षात् परम्परया वा पदार्थान्तरान्वितक्रियाबोधकाख्यातस्यैकवाक्यतालाभेन प्रकृते तदभावात् समानवाक्ये प्रकृत्यामन्त्रितस्येति निघातानुपपत्तिः । तदुक्तम्—

'सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥'

'पचति भवति' इत्यादौ सूत्रभाष्यादिरीत्या समानवाक्यत्वसत्त्वान्निघातसिद्धिः । 'तिङ्ङतिङः' इति सूत्रेऽतिङ्ग्रहणेन तिङन्तानामप्येकवाक्यत्वस्वीकारात्,

एकतिङ्वाक्यमिति मतेन। वस्तुतस्तु स्वघटितत्वस्वार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकपदघटितत्वस्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन तिङन्तविशिष्टत्वमेकवाक्यत्वम्। सम्बन्धघटकवैशिष्ट्यञ्च—स्वेतरत्वस्वार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरत्वोभयसम्बन्धेनेति।

क्त्वोऽर्था इति 'क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्यनेन क्रियायोगे कृत्वसुजादिविधानात्तद्द्योत्यार्थस्य क्रियायामेवान्वयः। 'करोति कर्तृकर्मादि व्यपदेशानि'ति व्युत्पत्त्या कारकशब्दस्य क्रियापरत्वेनापादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भावः। 'तेन तुल्यं क्रिया चेद्वतिरि'ति विहितवत्यर्थस्य क्रियायामन्वयस्तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वाद् धातुसम्बन्धाधिकारे विहितप्रत्ययार्थानामपि क्रियान्वयः। 'धातुसम्बन्धे प्रत्ययाः' इत्यत्र धातुपदस्य धात्वर्थपरत्वात्। समासायोग्यस्य प्रसज्यप्रतिषेधीयस्य नञर्थस्य क्रियान्वयः 'चैत्रो न पचती'त्यादौ क्रियाया एव निषेधप्रतीतेः। 'यस्य च भावेन भावलक्षणमि'ति सूत्रेण क्रियाज्ञापकक्रियाश्रयवाचकपदात् सप्तमीविधानात्तदर्थस्य क्रियान्वयः। 'षष्ठी चानादरे' इति विहितषष्ठ्यर्थस्यापि क्रियान्वयः। भूवादिसूत्रे क्रियाशब्देन भावनाव्यपदेशात्तत्र क्रियाशब्दस्य रूढिः। क्रियते=व्यापारेण निष्पाद्यते इति व्युत्पत्त्या फलांशे क्वाचित्कः प्रयोगस्तथा च 'रूढिर्योगापहारिणी'ति सिद्धान्तात् क्रियापदेन तत्र भावनाया एव ग्रहणम्।

**( ३० ) प्रश्नः—'अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः' कारिकेयं सप्रसङ्गं व्याख्येया।**

उत्तरम्—ननु कृतपूर्वीत्यत्र कर्मणो विशेषेण रूपेण प्रागन्वयाविवक्षया कृधातोरकर्मकत्वं सम्पाद्य तस्माद्भावे प्रत्ययः, स च सिद्धावस्थाक्रियामभिधत्ते इति। तस्या धात्वर्थभावनाया विशेषणत्वात्कथं तत्र पुनः कर्मणोऽन्वयः? इत्याशङ्कानिरासायाह—अविग्रहेत्यादि। 'ग्रामं गतः' इत्यत्र यथा क्तप्रत्ययार्थे विशेषणीभूता गमनादिक्रिया ग्रामादिभिः सम्बध्यते तथा 'कृतपूर्वी कटमि'त्यत्रापि। न च वृत्तिमात्रे समुदायशक्तेः स्वीकारादेकदेशभावनायां कथमन्वय इति वाच्यम्? 'देवदत्तस्य गुरुकुलम्' 'चैत्रस्य नप्ते'त्यादावेकदेशे गुरौ जन्यत्वरूपे चान्वयदर्शनेन पदार्थेन अन्वेति न तु पदार्थैकदेशेनेति नियमस्य नित्यसापेक्षाऽतिरिक्तविषयत्वात्। एवं गुणीभूतां क्रियामादाय 'भुक्त्वा पाकः' इत्यादौ क्त्वाद्युपपत्तिः। न च 'एकः पाको, द्वौ पाकौ, त्रयः पाका' इत्यादौ पूर्वोक्तरीत्या पच्वाच्यक्रियामादाय 'एकस्य सकृच्च' इति सूत्रेण सकृतः 'द्वित्रिचतुर्भ्यः सुच्' इति सुच

आपत्तिश्चेति वाच्यम्, 'द्विर्वचनेऽची'ति निर्देशेनेष्टत्वात् । अथवा क्रियाया एवाभ्यावृत्तिसम्भवेन 'क्रियाभ्यावृत्तिगणने' इति सूत्रे क्रियाग्रहणसामर्थ्यात् साध्यमात्रस्वभावक्रियायोगे तद्विधानेनादोषः, द्विर्वचनमिति तु द्विःप्रयोगो द्विर्वचनमिति भाष्यप्रयोगादुपपादनीयमिति दिक् ।

( ३१ ) प्रश्नः—'भेद्यभेदकसम्बन्धः' इत्यादि कारिकाशयं विशदय्य लिख ।

उत्तरम्—ननु वैयाकरणमते बोधकतारूपा शक्तिराख्यातेऽप्यबाधितैव यतस्ततो भावनाबोधस्य जायमानत्वादिति धातोरेव भावना वाच्या नाख्यातस्येति कथं निर्णयः ? इति मीमांसकोक्तं युक्तमिति चेन्न, 'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरि'ति हर्यादिसम्मतेन व्याकरणस्मृतिः शब्दसाधुत्वपरा साधुशब्दे च बोधजनकतावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वमिति वदतां मीमांसकानां मते शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते इति व्याकरणेन भावनायां साधुत्वाविधानेनाख्यातस्य तत्र शक्तेरसम्भवतरत्वात् । तथा च यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः सूत्रकृदादिसम्मतत्वं तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्रेति लभ्यते । एवञ्च भावनामाख्यातस्य शक्तिभ्रमेण प्रयोगे 'नानृतं वदेदि'ति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं मीमांसकैर्दुष्परिहरणीयमेवेति दिक् ।

ननु वैयाकरणमते 'नानृतं वदेदि'ति निषेधस्य न क्रत्वर्थत्वं सिद्धयेत् किन्तु आख्यातेन कर्त्तुरुक्तत्वमिति श्रुत्या पुरुषार्थत्वमेव स्यात् । यद्यपि प्रकरणात् क्रत्वर्थतासम्भवस्तथापि 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि'ति जैमिनिसूत्रेण प्रकरणतः श्रुतेर्बलवत्त्वेन बाधादिति मीमांसकोक्तं युक्तमिति चेन्न, आख्यातश्रुत्या कर्त्तुरुपस्थितावपि न तस्य प्राधान्यं येन निषेधस्य पुरुषार्थता शक्येत । तथा च विशेषणतयोपस्थितस्य कर्त्तुः श्रौतनञर्थसम्बन्धाभावान्नात्र श्रुत्या प्रकरणबाध इत्यदोषात् । ननु कर्त्तुरप्राधान्येऽपि कर्तृवृत्तिभावनायाः प्राधान्यात् तस्या नञर्थान्वये तद्द्वाराऽऽख्यातकर्तुरप्यन्वयान्न श्रौतपुरुषार्थत्वानुपपत्तिरिति चेत्, सत्यम् । 'जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू' इति वाक्योक्तमन्त्रविधिवत् 'नानृतं वदेदि'ति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यात् प्रधानीभूतकर्त्रैवानृतवचनं वर्ज्यं स्यात् । क्रत्वर्थत्वे तु कर्त्रनपेक्षत्वेन यज्ञप्रवृत्तैः सर्वैरपि वर्जनं

सिद्धयति इति विशेषसत्त्वेऽपि श्रुतिकरणाभ्यां क्रतुसम्बद्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेन बोधे मानाभावेन क्रतुयुक्तपुरुषधर्मत्वेऽपि अनुष्ठाने विशेषाभावादित्यलं पल्लवितेनेति ।

इति धात्वर्थप्रकरणम्

---

वर्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥

## अथ लकारार्थप्रकरणम्

( ३२ ) प्रश्नः—वर्तमानत्वं परिष्कृत्य तत्प्रत्ययवाच्यं प्रकृतिवाच्यं वेति विवेच्यताम् । आर्ष्टिकासौदिक वेले पुन्त्रम से पर्यो रमाउनी (३३-३२)

उत्तरम्—दशलकारेष्वादितः पठितत्वात्पूर्वं लट्लकारार्थः प्रयुज्यते । तत्र च 'वर्तमाने लट्' इति सूत्रेण वर्त्तमानार्थे लटः विहितत्वात् पूर्वं वर्तमानत्वं परिष्कुरुते । भूतभविष्यद्भिन्नत्वं वर्तमानत्वमिति चेन्न, वर्तमानभविष्यद्भिन्नत्वं भूतत्वं, भूतवर्तमानभिन्नत्वं भविष्यत्त्वमिति अन्योऽन्याश्रयात् ।

प्रारब्धापरिसमाप्तत्वमिति चेन्न ? ह्यो दशवादनमारभ्य द्विवादनपर्यन्तं जातपाकगतद्वादशवादनकालिकपचिक्रियाबोधनतात्पर्येणाद्यापि पचतीति प्रयोगापत्तेः । अतो धातुविशिष्टत्वं वर्तमानत्वम् । धातुवैशिष्ट्यञ्च—स्वप्रयोगाधिकरणत्व-स्ववाच्ययावद्व्यापारप्रतियोगिकप्रागभावकूटानधिकरणत्व-स्ववाच्ययावद्व्यापारप्रतियोगिकध्वंसकूटानधिकरणत्वैतत्त्रितयसम्बन्धेनेति । पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तस्य सत्त्वाल्लट्सिद्धिः । न च 'आत्मास्ति' 'पर्वताः सन्ती'त्यादौ पूर्वोक्तवर्तमानत्वाभावात् कथं लडिति वाच्यम् ? तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादायोपपत्तेः । तदुक्तं भाष्ये—इह भूतभविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम् ।

'परतो भिद्यते सर्वम् आत्मा तु न विकम्पते' इत्यादि वाक्यपदीये च । एवं 'तम आसीदि'त्यादि श्रुतयो भूतादिक्रियागतभूतत्वाद्यारोपेण योज्याः । क्रियासामान्यवाचकस्य धातोर्वर्तमानत्वादिविशिष्टे लक्षणायां लडादेस्तात्पर्यग्राहकत्वं प्रत्ययानां वाचकत्वविलोपपत्तिभिया अन्वयव्यतिरेकाभ्यां वर्तमानत्वं लडादिवाच्यमेवेति पक्षान्तरमिति दिक् ।

पर्वतादिस्थितिक्रिया परतो भिद्यते ।

( ३३ ) प्रश्नः—परोक्षत्वं परिष्कृत्य लिडर्थो निरूप्यताम् ।

उत्तरम्—अद्यतनानद्यतनभेदेन कालो द्विविधः । स च भूतभविष्यद्भेदेन पुनर्द्विधः । अतोऽद्यतनभूतात्मकोऽनद्यतनभूतात्मकोऽद्यतनभविष्यदात्मकोऽनद्यतनभविष्यदात्मकश्च चतुर्धा हि काल इति व्यवहारः । तत्र 'परोक्षे लिट्' इत्यनुशासनादद्यतने भूते परोक्षे लिड् भवतीत्यर्थो लभ्यते ।

परोक्षत्वञ्च प्रत्यक्षाज्ञानविषयत्वमिति चेन्न, प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादि प्रयोगापत्तेः, यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियासम्भावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तेश्च । अत आह—साक्षात्करोमीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम् । न च कस्याश्चित् क्रियायाः प्रत्यक्षत्वे तथाविधाभिप्रायेण तादृशप्रयोगव्यावृत्त्यर्थं परोक्षमिति पदं सार्थकं भवेत् तच्च 'न क्रिया नामधेयमत्यन्तापरदृष्टे'ति भाष्यात् । ननु क्रियायाः अतीन्द्रियत्वेन प्रत्यक्षविषयत्वाभावादेव सिद्धे परोक्षपदोपादानं निष्फलमिति वाच्यम्, तन्न, पिण्डीभूतायाः क्रियायाः प्रत्यक्षाविषयत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् । अत एव 'पश्य मृगो धावति' इत्यत्र धावनक्रियाया दृशिकर्मता सिद्धा । केचिद् व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितं तेन 'पश्य मृगो धावती'त्यादौ न दोष इति । न च स्वक्रियायाः स्वं प्रत्यपरोक्षत्वाद् 'व्यातेने किरणावलीमुदयनः' इत्यत्र कथं लिडिति वाच्यम् ? तस्याप्रामाणिकत्वात् । 'मत्तोऽहं किल विललापे'तिवत् स्वव्यापारस्य परोक्षत्वोपपादनेऽपि बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थेऽनद्यतनातीतत्वयोरभावेन तदर्थकलिडसम्भवादिति दिक् ।

( ३४ ) प्रश्नः—अनद्यतनत्वं परिष्कृत्य लङर्थो निरूप्यताम् ।

उत्तरम्—अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् 'अनद्यतने लङ्' इत्यनुशासनात् । अनद्यतनत्वञ्च—अद्यतनभिन्नत्वमनद्यतनत्वम् । अद्यतनत्वं च—स्वाव्यवहितोत्तरत्वसम्बन्धेन वर्तमानध्वंसप्रतियोगिरात्र्यर्धविशिष्टे सति वर्तमानप्रागभावप्रतियोगिरात्र्यर्धेन स्वाव्यवहितपूर्वत्वसम्बन्धेन विशिष्टं यद्दिनं तत्त्वम् । 'अस्य पुत्रोऽभवत्' इत्यादौ प्रकृतशब्दप्रयोगाधिकरणदिनप्राग्वृत्तिव्यवहितमव्यवहितं वा तत्र सर्वत्रायं प्रयोगो भवति । वर्तमानध्वंसप्रतियोगि अनद्यतनकालवृत्तिरेतत्सम्बन्धिपुत्रकर्तृकोत्पत्त्यनुकूलो व्यापार इति शाब्दबोधः ।

( ३५ ) प्रश्नः—लिडर्थे प्रतिवादिनां विप्रतिपत्तीः प्रदर्श्य वैयाकरणसिद्धान्तेन लिडर्थो निरूप्यताम् ।

उत्तरम्—विध्यादीनां चतुर्णां प्रवर्तनायामन्तर्भावात् 'प्रवर्तनासम्प्रश्नप्रार्थनेषु लिङि'त्येव सूत्रमस्तु। तदुक्तं वाक्यपदीये—

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥' इत्यादि।

प्रवर्त्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तच्चेष्टसाधनत्वस्यास्तीति, इष्टसाधनत्वमेव विध्यर्थः। न च लोके कृतिसाध्यत्वज्ञानस्य प्रवर्त्तकत्वेन प्रवर्त्तकज्ञानविषयतावच्छेदकत्वं कृतिसाध्यस्यापि सम्भवतीति तदपि कुतो न विध्यर्थं इति वाच्यम्? यागो मत्कृतिसाध्यो मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वाद् इत्यादि अनुमानेन तस्यावगमात्। नन्वेवमपि मधुविषसम्पृक्तान्नभोजनादौ प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वज्ञानस्यापि हेतुत्वमावश्यकम्, तथा च तदपि कुतो न विध्यर्थ? इति चेन्न, द्वेषाभावेनान्यथासिद्धत्वात्। न चान्वयव्यतिरेकस्योभयत्र साम्यात् बलवदनिष्टाजनकत्वेन द्वेषाभावस्यान्यथासिद्धिः कुतो नेति वाच्यम्? आस्तिककामुकस्य नरकसाधनताज्ञानदशायाप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तदुक्तं मण्डनमिश्रैः—

'पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनाम्॥' इति।

( ३६ ) प्रश्नः—लृङर्थो विविच्यताम्।

उत्तरम्—क्रियाऽनिष्पत्तिगम्यमानायां भूते भाविनि च हेतुहेतुमद्भावे सति लृङ् 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्यनुशासनात्। कार्यकारणभावापन्नप्रकृत्यर्थयोर्भूतत्वे भविष्यत्त्वे वा गम्यमाने लृङ् इत्यर्थः। यथा—'सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्।' अत्र सुवृष्टिभवनं हेतुः ( कारणम् ), सुभिक्षभवनं हेतुमद् (कार्यम्), तादृशहेतुहेतुमद्भावप्रयोजकाभ्यां द्वाभ्यामपि धातुभ्यां लृङ्। यस्मिन् देशे काले वा ययोः क्रिययोः सम्भवस्तदन्यस्मिन् देशे काले वा तयोः सम्भावनं प्रसञ्जनम्, यत्र बाधापत्तिस्तत्र चाहार्य एव ज्ञानं धातुवाच्यम्। यत्र तु न तथा तत्रोत्कटकोटिकज्ञानरूपसंशय एव। यथा—'यदि वर्षसहस्रमजीविष्यत्तदा पुत्रशतमजनिष्यत्' इति। अत्र यदि शब्दार्थोऽनिर्धारणं कालविशेषश्चार्थः। व्यापकत्वं—द्वितीयार्थः, एवञ्चानिर्धारितकालविशेषवृत्तिभविष्यद्धेतुभूतसहस्रवर्षव्यापकजीवित्वप्रकारकसम्भावनापकर्तृका तत्कर्तृकालकालिकभविष्यकार्यभूतशतपुत्रकर्मकोत्पत्त्यनुकूलफलव्यापारसम्भावनेति बोधः।

अत्र सहस्रजीवित्वस्य कर्तरि वाधज्ञानसत्त्वे आहार्यज्ञानात्मकमेव सम्भावनम्, तस्यासत्त्वे तु तादृशसंशयरूपं तच्छाब्दबोधविषय इति बोध्यम्। एवम्भूतेऽप्युक्तार्थे लृङ्। यथा—'यदि पर्वताः कोमला अभविष्यन् तदा आरण्यकैरेवाभक्षयिष्यन्' इति। अत्र यदि शब्दस्यातत्त्वं कालविशेषश्चार्थः लृङश्चातीतत्वं हेतुहेतुमत्व-प्रसक्तिसम्भावना चार्थः।

इति लकारार्थप्रकरणम्

---

## अथ सुबर्थ-निर्णयः

( ३७ ) प्रश्नः—'आश्रयोऽधिरुद्देश्यः सम्बन्धः शक्तिरेव वे'ति कारिकाशयो निरूपणीयः।

उत्तरम्—पदत्वप्रयोजकतिङर्थनिरूपणानन्तरं तत्प्रयोजकसुबर्थनिर्णयस्या-वश्यकत्वात्सुबर्थमाह—आश्रय इत्यादिना। तत्र द्वितीया-तृतीया-सप्तमीनामा-श्रयोऽर्थस्तत्राश्रयत्वं यद्यपि भिन्नं 'कर्तुरीप्सिततमं कर्म' इत्यनुशासनेन प्रकृत-धात्वर्थव्यापारप्रयोज्यफलाश्रयो द्वितीयार्थः। कर्त्रर्थकतृतीयायाः प्रधानधात्वर्थ-व्यापाराश्रयस्त्वमर्थः। प्रधानत्वञ्चात्र—कारकान्तरप्रयोज्यत्वेनाविवक्षितत्वम्। 'साधकतमं करणम्' इत्यनुशासनेन 'क्रियायाः परिनिष्पत्तिर्यद् व्यापारा-दनन्तरम्' इति कारिकाप्रामाण्याच्च करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ।

एवमेव सप्तम्या अप्याश्रयोऽर्थः 'सप्तम्यधिकरणे च' इत्यधिकरणे सप्तमी-विधानात्। अधिकरणत्वञ्चात्र—कर्तृनिष्ठक्रियाया कर्मनिष्ठक्रियायाश्चाश्रय एव।

अवधि पञ्चम्यर्थः 'अपादाने पञ्चमी' इत्यनुशासनेनापादानार्थे पञ्चमी-विधानात्। अपादानत्वञ्च ध्रुवत्वं तदवधिकविभागजनकक्रियानाश्रयत्वे सति धात्वर्थतत्क्रियाजन्यतद्विभागाश्रयत्वमिति। उद्देश्यश्चतुर्थ्यर्थः 'सम्प्रदाने चतुर्थी' इत्यनुशासनेन सम्प्रदानेऽर्थे चतुर्थीविधानात्। सम्प्रदानत्वञ्च—'कर्मणा यमभि-प्रैति स सम्प्रदानम्' इति सूत्रेण करणभूतेन कर्मणा यमीप्सति तत्कारकं सम्प्रदान-मित्यर्थकादुद्देश्योऽर्थः। 'षष्ठी शेषे' इति सूत्रेण, शेषार्थे षष्ठीविधानात् तस्याः सम्बन्धमात्रमर्थः। तथापि कारकषष्ठ्यास्तु शक्तिरेवेत्यूह्यम्। 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रे शक्तिः कारकमिति पक्षस्य भाष्ये दर्शनात्।

( ३८ ) प्रश्नः—अतीतानागतादिपरोक्षस्थले कर्मत्वोपपादनप्रकारः प्रदर्शनीयः ।

उत्तरम्—ननु 'कर्तुरीप्सिततमं कर्मे'ति सूत्रेण क्रियाजन्यफलाश्रयस्य कर्मत्वविधानात् 'घटं जानाती'त्यादौ ज्ञानजन्यावरणभङ्गरूपफलाश्रयत्वेन विद्यमानघटस्य कर्मत्वेऽपि भाविनि नष्टघटे निराश्रयस्य ज्ञानजन्यावरणभङ्गस्यासम्भवात् कथं तत्र कर्मतेति चेन्न, 'यथापूर्वं जानामी'ति प्रयोगानुरोधाद् भाविनि नष्टस्थलेऽपि ज्ञानजन्यावरणभङ्गस्यावश्यकत्वादन्यथाऽतीतदशायामाधुनिकज्ञानस्यावरणभङ्गाजनकत्वेन 'यथापूर्वं न जानामी'ति प्रयोगस्य प्रामाण्यापत्तेः । न च विनष्टे घटे वास्तवतदाश्रयतैव कथमिति वाच्यम् ? यथानुभवानुरोधेनातीतघटे विषयतया ज्ञानाश्रयताङ्गीकारो नैयायिकानां तथाऽस्माकमपीत्यदोषात् । नन्वतीतो घटो ज्ञानविषय इति प्रतीत्यनुरोधात् तादृशघटस्य विषयतया ज्ञानाश्रयत्वेऽपि आवरणभङ्गाश्रयतायां प्रमाणाभाव इति चेन्न, सत्कार्यवादसिद्धान्तेनोपपत्तेः । तदुक्तम्—

'तिरोभावाभ्युपगमे भावनां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥' इति दिक् ।

( ३९ ) प्रश्नः—फलाश्रयत्वस्य कर्मत्वस्वीकारे प्रयागात् काशीं गच्छति चैत्रे चैत्रप्रयागयोरापतितं कर्मत्वं वारणीयम् ।

उत्तरम्—ननु प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्रयस्य कर्मत्वे 'प्रयागात् काशीं गच्छति चैत्रः' इत्यत्र प्रकृतधात्वर्थप्रधानीभूतोत्तरदेशसंयोगानुकूलव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वं काशीचैत्रयोरुभयोरपि सत्त्वात् संयोगरूपफलाश्रयत्वेन चैत्रस्य विभागरूपफलाश्रयत्वेन प्रयागस्य च कर्मतापत्तिरिति चेन्न, तदीयकर्तृसंज्ञया कर्मसंज्ञाया बाधेनोक्तापत्त्यसम्भवात् । न च कर्मसंज्ञाया बाधनेऽपि वास्तवकर्मत्वस्य तत्राबाधाद् द्वितीयापत्तिर्दुर्वारेति वाच्यम्, 'गमयति कृष्णं गोकुलमि'तिवत् 'पाचयति कृष्णेने'त्यत्र कृष्णपदाद् द्वितीयापत्तिवारणाय द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात् । न चैवमपि चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्तमानो व्यापार इति शाब्दबोधः कुतो नेति वाच्यम् ? धात्वर्थफलविशेष्यकबोधं प्रति प्रकारतासम्बन्धेन धात्वर्थव्यापारानधिकरणाश्रयोपस्थितेर्हेतुत्वेनादोषात् । समभिव्याहृतधात्वर्थफलशालित्वस्य क्रियाजन्येत्यनेन विवक्षणात् विभागस्य तथात्वाभावेन न प्रयागस्य कर्मत्वम् । अत्र तार्किका आद्यदोषवारणाय धात्वर्थक्रियायां परसमवेतत्वं विशेषणं विभागाश्र-

यस्य प्रयागस्य कर्मत्ववारणाय च फले धात्वर्थतावच्छेदकत्वं विशेषणं स्वीकुर्वन्ति। तथा च परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति वदन्ति। द्वितीयार्थपरसमवेतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेति शाब्दबोधं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितिहेतुरिति कार्यकारणभावानुरोधात् परसमवेतत्वधात्वर्थक्रियायामन्वेति। 'तण्डुलं पचति चैत्रः' इति वाक्यात् तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमांश्चैत्र इति बोधस्तन्न गौरवात्। 'पाचयति कृष्णं गोप' इत्यापत्तेश्च। तन्मते द्वितीयोत्पत्तौ कर्मसंज्ञाया नियामकत्वाभावात् 'तण्डुलं पच्यते स्वयमेवे'त्यापत्तेश्च। परसमवेतत्वादेरिष्टान्वयलाभाय पूर्वोक्तरीत्या कार्यकारणभावेऽतिगौरवादिति दिक्।

(४०) प्रश्नः—कर्मप्रकारान् विविच्य निर्वर्त्यविकार्ययोर्भेदः समुद्भावनीयः। पढ़ा है छ[illegible]

उत्तरम्—'कर्तुरीप्सिततमं कर्म' इति सूत्रेण विहितेप्सितत्वेन 'तथायुक्तं चानीप्सितम्' इति सूत्रेण विहितानीप्सितत्वेन च भेदेन ईप्सितानीप्सितं हि द्विविधं कर्म। प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वं निर्वर्त्यत्वम्। यथा—'घटं करोती'त्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा। विकार्यत्वञ्च प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतरफलत्वं विकार्यत्वम्। यथा—'तण्डुलानोदनं पचति' इत्यस्य तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीति विवरणात्। तथा च प्रकृते तण्डुलाश्रयविक्लित्त्यनुकूलव्यापाराश्रयक ओदनाश्रयकोत्पत्त्यनुकूलो व्यापार इति बोधः। क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वं प्राप्यत्वम्। यथा—'घटं पश्यति'। अनीप्सितं चतुर्विधम्। उदासीनं यथा—'तृणं स्पृशति'। द्वेष्यं यथा—'विषं भुङ्क्ते'। संज्ञान्तरैरनाख्यातं यथा—'गां दोग्धी'ति, अत्र अपादानादिकारकैरविवक्षितत्वादेव गो 'रकथितं चे'ति सूत्रेण कर्मत्वम्। अन्यपूर्वकं यथा—'क्रूरमभिक्रुध्यति' इत्यत्र क्रुध्धातुयोगे 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति सूत्रेण क्रूरस्य सम्प्रदानत्वे प्राप्ते 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इत्यनेनाभिपूर्वकत्वात् कर्मत्वमिति दिक्।

(४१) प्रश्नः—व्याससूत्रविरोधपूर्वकं वैयाकरणमतेन कर्तृत्वं विविच्यताम्।

उत्तरम्—'स्वतन्त्रः कर्ता' इत्यनुशासनेन 'धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते' इति वाक्यपदीयाद् यदीयो व्यापारो धातुनाऽभिधीयते स कर्तेति; स्वतन्त्रस्य कर्तृसंज्ञाविधानात् । स्वातन्त्र्यश्च—धात्वर्थव्यापाराश्रयत्वमतः कर्तृ-तृतीयाया आश्रयमात्रमर्थः । एतेन प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वं कर्तृ-त्वम् । अत एव यदाऽन्येषामपि कारकाणां व्यापारो धातुनाऽभिधीयते तदा तेऽपि कर्तृसंज्ञां भजन्ते । 'स्थाली पचति' 'एधांसि पचन्ति' इत्यादय उपपन्नाः । न च 'कर्मकर्तृव्यपदेशाच्चे'ति सूत्रे 'मनोमयः प्राणशरीरः' इति वाक्यस्य मनोमय-पदस्य जीवत्वे वाक्यशेषे तस्य एतमितः प्रेत्याभिसम्भवितास्मि, इत शरीरात्प्रेत्य =निर्गत्य एतं=स्वप्रकाशत्वादिगुणविशिष्टं प्राप्तास्मीत्यर्थकेन वाक्यशेषेणैकस्य प्राप्तिकर्मत्वकर्तृत्वव्यपदेशो विरुद्ध इति व्यासोक्तिर्न सङ्गच्छते, भवन्मते प्राप्ति-कर्मत्वम् । आख्यातेन च तस्य कर्तृत्वमुक्तम् । संज्ञयोराकडारीयतया समावेशा-ऽसम्भवेन परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात् । एतमिति द्वितीया न स्यादिति शब्दविरोधेऽधिकरणतात्पर्यात् । कर्ता हि त्रिविधः—शुद्धप्रयोजक-कर्मकर्तृभेदात् । 'मया हरिः सेव्यते' इत्यत्र शुद्ध-कर्ता । 'कार्य्यते हरिणा' इत्यत्र प्रयोजककर्ता । 'गमयति कृष्णं गोकुलमि'त्यत्र कर्मकर्त्रेति दिक् ।

( ४२ ) प्रश्नः—शक्तिविपर्ययादिति ग्रन्थाश्रयं विविच्य करणतृती-याया अर्थो निरूप्यताम् ।

उत्तरम्—'साधकतमं करणमि'ति सूत्रेण 'क्रियायाः परिनिष्पत्तिर्यद् व्या-पारादनन्तरम्' इति वाक्यपदीयाच्च करणतृतीयाया आश्रयव्यापारौ वाच्यौ । तमबर्थः प्रकर्षः स चाव्यवधानेन फलजनकव्यापारवत्त्वरूपः । तथा चाव्यव-धानेन फलजनकव्यापारवत् कारणं करणमिति । न चैकस्मिन् करणकर्तृ-शक्त्योरविरोधस्वीकारे यजेत जुहुयादित्यादिशास्त्रस्य सार्थक्याय जीवः कर्ता भवितुमर्हति, विज्ञानशब्दवाच्यबुद्धेः कर्त्तृत्वे तु करणशक्तिर्बुद्धेर्हीयते कर्त्तृशक्ति-श्चापद्येत इति शक्तिविपर्ययापत्तिरूपदोषोक्तिः कथं सङ्गच्छेतेति वाच्यम् ? बुद्धे कर्त्तृत्वे तदेवैतेषामित्यादिश्रुत्यन्तरे करणक्लृप्तस्य विज्ञानं यज्ञं तनुते इत्यादौ कर्तृत्वविवक्षायां बाधकाभावेऽपि द्वयोः शक्त्योर्युगपद्विवक्षाऽसम्भवेन विज्ञाने-नेति तृतीयान्तनिर्देशाऽसङ्गतेरिति शक्तिविपर्ययादित्यस्याश्रयात् । वस्तुतस्तु यथा—वास्यादिकरणहस्तकर्ता दुःखीभवति तद्रहितः सुखीभवति । तथा च विपर्ययादित्यस्य पराभ्युपगतबुद्धिकर्त्तृत्वनिरासे तात्पर्यम्, न तु बुद्धेः कर्त्तृत्वेन शक्तिकरणशक्तिपरित्याग इति न तद्विरोध इति दिक् ।

( ४३ ) प्रश्नः—सप्तमीविभक्त्यर्थः कः ? किञ्च तल्लक्षणम् ?

उत्तरम्—'सप्तम्यधिकरणे च' इत्यनुशासनेनाधिकरणे सप्तमीविधानात्, अधिकरणसंज्ञा च 'आधारोऽधिकरणम्' इति सूत्रेणाश्रयस्यैव। साक्षात्क्रियाश्रये कर्तृकर्मसंज्ञाभ्यां बाधात् सूत्रारम्भसामर्थ्यात्तद्द्वारकक्रियाश्रये एषाऽधिकरणसंज्ञा पर्यवस्यतीति भावः। अत एव 'गेहं प्रविशति' 'मोक्षमिच्छति' इत्यादौ धातुवाच्यव्यापारप्रयोज्यफलाश्रयत्वेन गेहमोक्षयोः कर्मत्वसिद्धौ द्वितीयैव। मोक्षे इच्छा इति तु आख्यातार्थकर्तृद्वारा इच्छतिक्रियायां मोक्षस्यान्वयाद् बोध्यम्। तथा च वाक्यपदीये—

'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥'

अतः कर्तृनिष्ठक्रियायाः कर्मनिष्ठक्रियायाश्चाधारोऽधिकरणसंज्ञकं भवति। कर्तृनिष्ठक्रियाया यथा—'कटे आस्ते'। कर्मनिष्ठक्रियाया यथा—'स्थाल्यां पचति' इति दिक्।

( ४४ ) प्रश्नः—पञ्चमीविभक्त्यर्थं निरूप्य परस्परान्मेषावपसरत इत्यत्र ग्रन्थकृद्दिशा पञ्चमी समर्थनीया।

उत्तरम्—'अपादाने पञ्चमी' इति सूत्रेणापादाने पञ्चमीविधानाद् अपायो विश्लेषस्तज्जनकक्रिया तत्रावधिभूतमपादानमिति।

'अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥'

इति वाक्यपदीयाच्चावधिः पञ्चम्यर्थः। तथा च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वमवधित्वम्। 'वृक्षात् पर्णं पतति' इत्यत्र पर्णस्यावधित्ववारणाय विशेषणदलम्, 'धावतोऽश्वात् पतती'त्यत्राश्वस्य क्रियाश्रयत्वादव्याप्तिवारणाय विश्लेषहेत्विति। न च 'कुड्यात् पततोऽश्वात् पतती'त्यश्वस्य विश्लेषजनकक्रियाश्रयत्वादुक्तापत्तिस्तदवस्थेति वाच्यम्, तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणदानेनादोषात्। ननूभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियाश्रयत्वात् 'परस्परान्मेषावपसरत' इति प्रयोगासङ्गतिरिति चेन्न, तद्विभागजनकतत्क्रियानाश्रयत्वे सति धात्वर्थताक्रियाजन्यतद्विभागाश्रयत्वमिति स्वीकारेणादोषात्। तथा हि निश्चलमेषस्थल इवात्रापि विभागस्यैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्यापादानत्वमिति। क्रियाशब्देन प्रकृतधात्वर्थक्रियाया विवक्षणाद् वृक्षकर्मजविभागवति वस्त्रे 'वृक्षाद्

वस्त्रं पतति' इति प्रयोगोपपत्तिः। वस्तुतस्तु विभागाश्रयमात्रं पञ्चम्यर्थः। पूर्वोक्तलक्षणन्त्ववधेरेव पञ्चमीवाच्यत्वे गौरवात्। 'आसनाच्चलितो राज्या-च्चलितः' इतिवद् 'वृक्षात् स्पन्दते' इति प्रयोग इष्ट एव। विभागश्रयत्वेना-पादानत्वाद् 'वृक्षात् त्यजति' इति प्रयोगस्य प्रामाण्यापत्तिरिति वाच्यम्, कर्म-संज्ञया अपादानसंज्ञाया बाधेनादोषात्। पञ्चमीजन्यापादानत्वबोधेऽप्यजादि-भिन्नधातुजन्योपस्थितेर्हेतुत्वात् भ्रमात्तादृशप्रयोगे कृतेऽपि न बाध इति। वस्तु-तस्तु 'त्रस्तादश्वात् पतितः' इत्यत्र गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वा-दित्याशङ्क्य न वाऽध्रौव्यस्याविवक्षितत्वादिति समाधानपरभाष्यविरोधान्न पूर्वोक्तप्रकारः समचीन इति। अपादानं त्रिविधम्—

'निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते॥'

इति वाक्यपदीयात्। यत्र साक्षात्समभिव्याहृतधातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम्, यथा—'अश्वात् पतति'। यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्, यथा—'बलाहकाद्विद्योतते'। अनुपात्तधात्वर्थक्रिया-साकाङ्क्षमपेक्षितक्रियम्, यथा—'कुतो भवान्? पाटलिपुत्राद्' इति दिक्।

**( ४५ ) प्रश्नः—चतुर्थ्यर्थं निरूप्य 'वरुणाय दण्डं प्रयच्छती'ति विहितं दण्डदानं न प्रतिपत्तिकर्म किन्तु चतुर्थीश्रुत्याऽर्थकर्मेति ग्रन्थकृद्-दिशा विविच्यताम्।**

उत्तरम्—'चतुर्थी सम्प्रदाने' इत्यनुशासनेन सम्प्रदानार्थे चतुर्थीविधानात् सम्प्रदानत्वञ्च करणभूतेन कर्मणा यमभिप्रैति=ईप्सति, तत्कारकत्वमिति। 'कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रस्वरसादुद्देश्यत्वञ्चतुर्थ्यर्थः। उद्देश्य-त्वमेव शेषित्वम्। तच्चार्थकर्मप्रयोजकम्। अत एव प्रासनवन्मैत्रावरुणाय दण्ड-प्रदानं कृतार्थत्वाद् इत्यधिकरणे 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति विहितं दण्डदानं किं प्रतिपत्तिकर्म उत अर्थकर्म? इति सन्दिह्यते। यन्निरुक्तशेषि-त्वप्रयोज्यं कर्म तदर्थकर्मेत्युच्यते। पदसङ्कीर्णतानिवर्तकं कर्म तत्प्रतिपत्तिकर्मेत्यु-च्यते। अत्र द्वितीयाश्रुत्या दण्डस्यैवेच्छाविषयत्वावगतेः प्रतिपत्तिकर्मैव भवितु-मर्हतीति। तदनन्तरं चतुर्थीश्रुत्यामैत्रावरुणस्यैवोद्देश्यत्वलक्षणार्थंप्राधान्यावगतेः दण्डी प्रैषानन्वाह इति प्रैषानुवादेऽवलम्बनाय दण्डस्योपयोक्ष्यमाणत्वाच्च मैत्रा-वरुणार्थमिदं दण्डप्रदानमित्यर्थकर्मेति निर्णीतम्। 'सम्यक् प्रदीयते यस्मै

तत्सम्प्रदानमि'त्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वस्थापनानुकूलव्यापारार्थक दाधातुप्रयोगे चतुर्थीविधानाद् 'रजकस्य वस्त्रं ददाती'त्येव प्रयोग इति केचित्, तन्न, 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाती'ति भाष्याविरोधेनान्वर्थाश्रयणे प्रमाणाभावादिति । सम्प्रदानं त्रिविधम्—'अनिराकरणात् कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥' इति वाक्यपदीयात् । 'सूर्यायार्घ्यं ददाति' 'विप्राय गां ददाति' 'उपाध्यायाय गां ददाति' इति क्रमेणोदाहरणानि इति दिक् ।

० ( ४६ ) प्रश्नः—'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्' इति कारिका सप्रसङ्गं व्याख्येया ।

उत्तरम्—ननु 'पक्वस्तण्डुलः, प्राप्तोदको ग्रामः' इत्यत्राश्रयत्वस्य वाच्यत्वे आश्रयत्वस्यावच्छेदकत्वं कल्प्यं कल्प्यमानेऽवच्छेदकधर्मे गौरवमाशङ्क्य 'सुपां कर्मादयोऽप्यर्थाः' इत्यादिभाष्यात् 'कर्मणि द्वितीये'त्यादिसूत्रस्वरसात् पक्वतण्डुलः, प्राप्तोदको ग्रामः इत्यादावभेदान्वयदर्शनाच्च विभक्तीनां धर्मिवाचकत्वम् । अत एव प्रकृतिप्रत्यार्थयोरभेदः संसर्ग इत्येकः पक्षः । प्रकृत्यैवाश्रयस्यापि लाभेनान्यलभ्यां हि शब्दार्थं इति न्यायात् 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रे शक्तिः कारकमिति भाष्याच्च विभक्तीनां धर्ममात्रवाचकत्वम् । अत एव आकृत्यधिकरणमपि सङ्गच्छते, इत्यपरः पक्षः । 'घटं जानाती'त्यत्र द्वितीयाया विषयतायां लक्षणेति नैयायिकमतमयुक्तम्, 'सुपां कर्मादयोऽप्यर्थाः' इति भाष्यविरोधात् 'स्वौजसमौडि'ति सामान्यसूत्रेण सिद्धे कारकप्रकरणं नियमार्थं कर्मण्येव द्वितीयेति प्रत्ययनियमः, कर्मणि द्वितीयै वेत्यर्थनियमश्चेत्यादि । तथा चोभयविधनियमविरुद्धलक्षणादिकमसाधुत्वप्रयोजकम् । अत एव विभक्तौ न लक्षणेति वृद्धनैयायिकोक्तिः सङ्गच्छते । एवञ्च व्याकरणविरोधेन वृद्धनैयायिकोक्तिविरोधेन च नव्यतार्किकमतमनादरणीयमिति दिक् ।

इति सुबर्थप्रकरणम् ।

---

## नामार्थप्रकरणम्

( ४७ ) प्रश्नः—'एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथे'ति कारिका सप्रसङ्गं व्याख्येया ।

उत्तरम्— ननु 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामि'ति सूत्रस्वरसात् 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् सिद्धमि'ति भाष्यवार्तिकात् 'आकृतिं वाजप्यायनः' इति सरूपसूत्रस्थभाष्याच्च जातिरेव वाच्या, अनेकव्यक्तीनां शक्तिकल्पने गौरवात् । न च व्यक्तीनामनन्तत्वेऽपि प्रत्येकमेकत्वात्तत्र शक्तिस्वीकारे न गौरवमिति वाच्यम्, एकस्यामेव व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरबोधाय लक्षणायां स्वसमवेताश्रयत्वस्य संसर्गत्वे गौरवात् । जातिवादे तु व्यक्तिबोधाय लक्षणायामाश्रयत्वमेव संसर्ग इति लाघवम् । न च गोत्वादिजात्यनुगतीकृतयावद्व्यक्तिषु शक्तिस्वीकारान्न दोष इति वाच्यम्, नागृहीतविशेषणबुद्धिर्विशेष्यमधिगच्छति इति न्यायाद्विशिष्टवाच्यमपेक्ष्य जातेरेव वाच्यत्वौचित्यात् । व्यक्तेर्बोधश्च निरुढलक्षणया । तत्र च विभक्त्यर्थान्वय इति । यद्वा सरूपसूत्रारम्भादणुदित्सूत्रेऽण् ग्रहणाच्च व्यक्तिरेव पदार्थः, शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव शक्तिग्रहात् । सम्बन्धिताऽवच्छेदकजात्यनुगतीकृतनानाव्यक्तिष्वेकधर्मावच्छिन्नाया एकस्या एव शक्तेरुपगमान्न व्यक्तिप्रयुक्तशक्त्यानन्त्यगौरवम् । न च घटत्वादेर्घटनिष्ठशक्यतावच्छेदकत्वस्वीकारे नागृहीतविशेषणन्यायाद् घटत्वाद्येव वाच्यमस्त्विति वाच्यम्, दण्डत्वादीनामन्यथाऽसिद्धत्वेनाकारणत्वेऽपि कारणताऽवच्छेदकत्ववत्तीरत्वादीनां प्रहावाद्यसम्बन्धितयाऽलक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववदशक्यस्यापि घटत्वादेः शक्यतावच्छेदकत्वसम्भवात् । तदुक्तं वाक्यपदीये—

'आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति ॥' इति दिक् ।

द्विकमिति । वस्तुतस्तु न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः इति भाष्यात् जातिविशिष्टा व्यक्तिर्व्यक्तिविशिष्टा जातिर्वा पदार्थः । न चैकमिति पक्षस्य निरालम्बनतापत्तिरिति वाच्यम्, बोधकत्वज्ञानविषयबोधांशे प्रकारिताऽवच्छेदिकाया जातेरैक्यात्तत्पक्षोपपत्तेरिति । न घटपदं घटविषयकबोधजनकमित्याकारकशक्तिज्ञानात् स्वरूपतो घटत्वप्रकारकविशिष्टबोधं प्रति घटत्वांशेऽन्यप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुत्वकल्पनात् प्रकृते घटत्वांशे जातित्वप्रकारकत्वेनादोष इति भावः ।

( ४८ ) प्रश्नः—पुंस्त्वादीनां स्वरूपप्रदर्शनपुरस्सरं तेषां शब्दगतत्वमर्थगतत्वं वेति लिङ्गं प्रतिपादनीयम् ।

उत्तरम्—'स्वमोर्नपुंसकात्' 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'तस्माच्छसो नः पुंसी'त्यादिशास्त्रप्रामाण्ये लिङ्गमपि प्रातिपदिकार्थं इत्याशयेनाह—'त्रिकमितीति'। ननु 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः' इत्यादिलौकिकं लिङ्गं स्यादिति चेन्न, दाराकलत्रादिशब्देषु पुंल्लिङ्गनपुंसकलिङ्गयोरनापत्तेः, अचेतनखट्वावृक्षादौ बाधाच्च सत्त्वरजस्तमोगुणानामाविर्भावः पुंस्त्वं, तिरोभावः स्त्रीत्वं स्थितिरन्तरलावस्था नपुंसकत्वमिति शास्त्रीयलिङ्गमेव शब्दवाच्यम्। न च लिङ्गस्योक्तरूपत्वे तेषां परस्परविरुद्धानामेकत्रावस्थानासम्भवेनानेकलिङ्गकोऽयं शब्द इति व्यवहारानुपपत्तिरिति वाच्यम्, समानानुपूर्वीकत्वेन शब्दानामभेदारोपात्तदुपपत्तेः। अत एव पदार्थपदे पुंस्त्वमेव, व्यक्तिपदे स्त्रीत्वमेव, वस्तुपदे नपुंसकत्वमेवेति सर्वत्रायं पदार्थः, इयं व्यक्तिः, इदं वस्तु इति व्यवहारः। ननु शब्दनिष्ठोक्तलिङ्गस्यैव स्त्रीपुंसादिव्यवहारौपयिकत्वे तस्य स्त्रीवाचकपशुशब्देऽपि सत्त्वात् 'पशुना यजेत' इत्यत्र पशुस्त्रीकरणकयागादप्यदृष्टसिद्धिः स्यादिति वाच्यम्, लिङ्गविशेषविशिष्टस्यैवार्थविशेषवाचकतया लिङ्गानुशासनशास्त्रसिद्धतया पशुनेत्यत्राऽस्त्रीविहितनाभावदर्शनेन च पुम्पशोरेव ग्रहणात्। 'पश्वाऽनतायुं गुहा चरन्तं पश्वे नृभ्यो गवे' इत्यादि वेदे पशुशब्दस्य स्त्रीलिङ्गत्वस्यापि दर्शनेन न तस्य व्यक्त्यादिशब्दसाम्यमिति। वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणशास्त्रेण निर्णीतत्वात्। पश्वाऽनतायुमित्यादौ जसादिषु छन्दसि वा वचनमिति नाभावाभावात्। व्यक्त्यादिशब्दोक्तलिङ्गस्येव पशुशब्दोक्तलिङ्गस्यापि स्त्रीपुंसादिसाधारण्यादुक्तापत्तिस्तदवस्थेति वाच्यम्। 'अग्निषोमीयं पशुमालभेते'त्यत्र पशुशब्देन नाश्वादिर्गृह्यते किन्तु अज एव 'छागस्य वपाया' इति मन्त्रे छागपदोपादानादेवं छागस्येति स्त्रियामसम्भवेन पुम्पशोर्ग्रहणात्।

**(४९) प्रश्नः–संख्याकारकयोर्वाच्यं प्रत्ययः, आहोस्वित् प्रातिपदिकम्?**

उत्तरम्—चतुष्कं संख्यासहितं त्रिकं पञ्चकं कारकसहितं चतुष्कम्। न चान्वयव्यतिरेकाभ्यां लिङ्गादित्रयस्य प्रत्ययवाच्यत्वमेवोचितमिति वाच्यम्, 'दधि पश्ये'त्यादौ प्रत्ययमजानतोऽपि कर्मत्वादिबोधेनान्वयव्यतिरेकयोर्व्यभिचारात्, प्रकृतेरेव लिङ्गानुशासनदर्शनाच्च। वस्तुतस्तु लिङ्गानुशासनेन 'नपुंसकादि'त्यादिसूत्रस्वारस्येन च लिङ्गस्य प्रकृत्यर्थत्वेऽपि संख्याकारकयोः प्रकृत्यर्थत्वमेवेति नाग्रहः, प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे युक्तिसाम्यात्, किन्तु अनन्तानां प्रकृतीनां वाचकत्वकल्पनापेक्षया स्वादीनामेव तत्कल्पने लाघवात्।

लुप्तविभक्तिस्मरणादपि बोधाङ्गीकारेण संख्याकारकयोर्विभक्तिवाच्यतैव। अत एव 'द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः' इति वाक्यपदीयेन पक्षद्वयस्य व्युत्पादनं सङ्गच्छते इति विदाङ्कुर्वन्तु।

(५०) प्रश्नः—शब्दस्य प्रातिपदिकार्थत्वसाधिका युक्तय उपपादनीयाः।

उत्तरम्—ननु 'घटमानये'त्यादि शाब्दबोधे घटादिशब्दस्य भाने प्रमाणाभावेन तस्य प्रातिपदिकार्थत्वसाधनमनुचितमिति चेन्न, 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥' इति वाक्यपदीयात् 'विष्णुमुच्चारये'त्यादावर्थोच्चारणासम्भवेन विना शब्दविषयं शाब्दबोधासङ्गत्या च शब्दस्यापि प्रातिपदिकार्थत्वसिद्धेः। न च स्ववाच्यवाचकत्वसम्बन्धरूपलक्षणया नोक्तापत्तिरिति वाच्यम्, निरूढलक्षणायाः शक्तितुल्यत्वात्। 'जवगडदशमुच्चारये'त्यादौ समुदायस्य कुत्राप्यशक्तत्वाच्छक्याग्रहेण शक्यसम्बन्धलक्षणाया असम्भवाच्च। न च तद्घटकवर्णानामेकाक्षरकोशादौ शक्तिप्रतिपादनान्न लक्षणाया अनुपपत्तिरिति वाच्यम्, ज्ञाताया एव वृत्तेः पदार्थोपस्थित्योपयिकत्वेन प्रकृतेस्तदग्रहादुक्तानुपपत्तेस्तादवस्थ्यात्। 'गामुच्चारये'ति भाषाशब्दानामनुकरणे साधुत्वस्य सर्वैरेवाभ्युपगमात्तत्र नैयायिकमते शक्त्यभावेन लक्षणाया असम्भवाच्च। किञ्चानुकार्यानुकरणभेदेऽनुकार्यस्य पदानुपस्थितत्वात् तत्सिद्धयेऽनुकार्यनिरूपितशक्तिरनुकरणे स्वीकार्या तदा शब्दोऽपि प्रातिपदिकार्थः। शब्दार्थयोरभेदविवक्षापक्षे श्रोत्रादिभिरुपस्थितत्वादर्थवद्भासते। न च घटपदादाकाशविषयकबोधवारणाय तदर्थविषयकशाब्दबोधम्प्रति तत्पदनिष्ठवृत्तिज्ञानाधीनतद्विषयकोपस्थितेर्हेतुत्वादनुकार्यस्याभेदविवक्षास्थले वृत्तिज्ञानाधीनोपस्थित्यभावात् कथं शाब्दबोधे भानमिति वाच्यम्, निरूपकताश्रयतान्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वकल्पनात्। सम्बन्धस्योभयनिरूप्यत्वेन पदार्थस्येव तद्बोधकत्वेन स्वस्यापि ज्ञानसम्भवाच्च। तदुक्तम्—

> 'ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
> तथैव सर्वशब्दानामेते पृथगवस्थिते॥'

इत्यादीति दिक्।

इति नामार्थप्रकरणम्।

---

# अथ समासशक्तिनिर्णयप्रकरणम्

(५१) प्रश्नः—प्राचीनोक्तसमासविभागं तल्लक्षणञ्च निरूप्यताम् ।

उत्तरम्—समासशक्तौ निरूपणीयायां घटकतया प्रविष्टस्य समाससामान्यस्य पूर्वं निर्वचनीयत्वेनाह—अर्थबोधकलौकिकविभक्त्यवहितपूर्ववर्तित्वप्रकारकज्ञानाविषयकपूर्वपूर्वपदघटितसमुदायत्वं समासत्वम् । स च चतुर्विधोऽव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात् । तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वन्द्वः । अन्यपदार्थप्रधानो बहुव्रीहिरिति प्राचीनोक्तसिद्धान्तस्तन्न, 'उन्मत्तगङ्गमि'त्यत्र उन्मत्ता गङ्गा यस्मिन्देशे इत्यर्थेऽव्ययीभावसमासेऽन्यपदार्थप्राधान्यसत्त्वाद बहुव्रीहिलक्षणातिव्याप्तिः । 'सूपस्य लेशः सूपप्रति' इत्यत्रोत्तरपदार्थप्राधान्यसत्त्वात् तत्पुरुषलक्षणातिव्याप्तिः । 'पिप्पल्या अर्द्धमर्द्धपिप्पली'त्यत्र पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिः । एवमेव 'द्वित्राः, शशकुशपलाशमि'त्यादावपि परस्परव्यभिचारात् । अतोऽव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्, तत्पुरुषाधिकारपठितत्वन्तत्पुरुषत्वम् । बहुव्रीह्यधिकारपठितत्वं बहुव्रीहित्वं, द्वन्द्वाधिकारपठितत्वं द्वन्द्वत्वमिति । एवञ्च 'सह सुपे'त्यत्र योगविभागेन सुपां तिङा नाम्ना धातुनाऽथ तिङां तिङा सुबन्तेनेति भाष्यव्युत्पादितषड्विधसमासविधानात् । समासश्चतुर्धेति प्रायोवाद इति दिक् ।

(५२) प्रश्नः—जहत्स्वार्थादिवृत्तिविशेषान् प्रदर्श्य सिद्धान्ते समासादिवृत्तौ भिन्ना शक्तिः सप्रमाणं निरूप्यताम् ।

उत्तरम्—राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः कल्पनाभावात् । क्लृप्तराजपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च । राजसम्बन्ध्यभिन्नः पुरुष इति बोधसम्भवे समासशक्तिरप्रामाणिकी, अत एव विशेषणान्वयोऽपि न राज्ञ पदार्थैकदेशत्वात् घनश्यामादौ च नैवादिप्रयोगशङ्का उक्तार्थत्वात् । लक्षणया राजसम्बन्ध्यभिन्नः पुरुष इति बोधेच्छायां समासस्य राजसम्बन्धवानितीच्छायां विग्रहस्य च प्रयोगसम्भवाद्विभाषेति वचनस्यापि नावश्यकत्वम् । पङ्कजादिदृष्टान्तमपि न युक्तं तत्रावयवशक्तिमजानतोऽपि बोधदर्शनेन लक्षणाया असम्भाव्यत्वात् । प्राप्तोदकादावुत्तरपदे एव लक्षणा । प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्त्यनुरोधात् । अत एव घटादिपदे चरमवर्णस्यैव वाचकत्वं मीमांसकैः स्वीकृतमिति व्यपेक्षावादिनां नैयायिकादीनां मतं युक्तमिति चेन्न, समासे शक्त्यस्वीकारेऽर्थवत्त्वाभावात् प्रातिपदिकत्वानापत्तेः ।

न च सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थकेन 'अतिप् प्रातिपदिकमि'ति न्यासेन सिद्धिरिति वाच्यम्, प्रत्येकं वर्णेषु संज्ञावारणाय अर्थवदित्यस्यावश्यकत्वेन समासे दोषस्य तादवस्थ्यात्। किञ्च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्त्या 'चित्रगुमानये'त्यादौ कर्मत्वाद्यनन्वयापत्तिः। किञ्च 'तण्डुलः पचती'-त्यादौ कर्मत्वेनान्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुत्वमित्यस्यावश्यकत्वेन लक्षणायामपि समासेऽनन्वयापत्तिः। किञ्च समाससमानार्थकवाक्यस्यैव विग्रहत्वमिति सिद्धान्तभङ्गापत्तिः, किं बहुना, 'वषट्कर्तुः प्रथमभक्षः, त्र्यङ्गैः स्विष्टकृतं यजति, अरुणया पिङ्गाक्ष्ये'त्यादौ एकप्रसरत्वभङ्गापत्तेरित्युक्त्या मीमांसकैरपि विशिष्टशक्तिः स्वीकृतेति दिक्।

(५३) प्रश्नः—'जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधे'ति कारिका सप्रसङ्गं व्याख्येया।

उत्तरम्—अथ समासशक्तिं निरूप्य जहत्स्वार्थाजहत्स्वार्थेति वृत्तिद्वयं निरूपयति—जहत्स्वार्थेति। जहत्स्वं यस्य स जहत्स्वः, जहत्स्वोऽर्थो यस्यां सा जहत्स्वार्था। स्वशब्दोऽत्र स्वीयपरः। अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्र जहत्स्वार्था, यथा—रथन्तरप्रवीणादिशब्देषु। अत एव 'जहत्स्वार्था तु तत्रैव यत्र रूढिविरोधिनी' इत्यभियुक्तवचनं सङ्गच्छते।

न जहत्स्वं यस्य सोऽजहत्स्वः, अजहत्स्वोऽर्थो यस्यां सा अजहत्स्वार्थेति, अवयवार्थनिरूपितसमुदायार्थत्वमजहत्स्वार्थत्वम्। अत एव राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, अजहत्स्वार्थावृत्त्यैव तल्लाभात्, क्लृप्तराजपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवाच्च। एवमेका सत्यपि वृत्तिः प्रयोगभेदेन द्वैविध्यं भजते। द्वैविध्यमधीयमानाऽपि वाच्यवैचित्र्येण त्रैविध्यमनुगच्छति। तासाञ्च वृत्तीनां कारणं भेदसंसर्ग एव। सामर्थ्यन्नाम भेदः, संसर्गो वा अपर आह, भेदसंसर्गौ वा सामर्थ्यम्। भेदश्चात्रान्योन्याभावरूपः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः। यदि वृत्तिजन्यबोधे भेदसंसर्गयोर्भानन्न स्यात्तदा सामर्थ्यमेव न स्यात्, सामर्थ्यस्य तदात्मकत्वादिति भावः। राजादिपदसमभिव्याहृतपुरुषादिपदेन राजादिविशिष्टपुरुषादिरूपविशिष्टार्थस्यैव बोधो न तु समुदायजन्यशाब्दबोधस्याराजकीयत्वप्रकारकज्ञानं प्रतिबन्धकम्। अराजकीयत्वस्य राजसम्बन्धावच्छिन्नप्रतियोगिताकभेदरूपतया अराजकीयत्ववद्राजसम्बन्धरूपत्वेन तत्प्रकारकज्ञानस्य प्रतिबन्धकत्वसम्भवात्। 'राजपुरुषो देवदत्तस्य चे'ति प्रयोगस्य

वारणन्तु तेन सम्बन्धेनैकविशेषणविशिष्टे विशिष्ये तत्सजातीयसम्बन्धेन विशेषणान्तरान्वयबोधायोगात् ।

( ५४ ) प्रश्नः—समासशक्तिं निरूप्य मीमांसकानां विमतिरुपनीयताम् ।

उत्तरम्—'राजपुरुष' इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्तेर्न समासे विशिष्टशक्तिरत एव राज्ञः पदार्थैकदेशतया पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति सिद्धान्तान्न तत्र शोभनादिविशेषणान्वयः । 'निष्कौशाम्बिरि'त्यादौ क्रान्ताद्यर्थवाचकानां विग्रहे वाक्ये निष्क्रान्त कौशाम्ब्या इत्यादौ यथा प्रयोगो भवति तथा वृत्तिजन्यबोधेऽपि तद्भानं भवति । एवमेव 'प्राप्तोदको ग्राम' इत्यादावपि लुप्यमानविभक्तीनामध्याहारेणैव तदर्थसम्भवात् । न च लक्षणावसरः स्वबोध्यसम्बन्धस्यैव लक्षणात्वाभ्युपगमात् । बोधोत्तरमन्वयानुपपत्तिप्रतिसन्धानरूपलक्षणाबीजस्याप्यसम्भवात् । 'प्राप्तोदको ग्राम' इत्यादौ तदसम्भवात् । प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामप्युदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थलाभात् । न च प्राप्तेति क्तप्रत्ययस्य कर्त्रर्थकत्वात्तेनैव कर्त्रर्थलाभसम्भवः कर्मणश्च लक्षणयाऽभ्युपगमात् । तथा सति समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिस्वीकारात् । उदकाभिन्नम्प्राप्तिकर्मेति बोधास्वीकारे कर्तृतासम्बन्धेनोदकस्य प्राप्तिक्रियायान्वयास्वीकारे च, समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः । नामार्थधात्वर्थयोर्भेदेनान्वयासम्भवात् । तयोर्भेदस्वीकारेऽपि क्तप्रत्ययस्य कर्मणि लक्षणा न स्वीक्रियते, किन्तु प्रत्ययार्थः कर्ता प्रकृत्यर्थो विशेषणम् । तस्मिन्नुदकस्याभेदेनान्वयः । एवमेव 'ऊढरथः, उपहृतपशुः, बहुपाचिके'त्यादावपि द्रष्टव्यम् । अत्र हि रथकर्मकवहनकर्ता पशुकर्मकोपहरणोद्देश्यो बहुपाचककर्त्रधिकरणमिति विशिष्टशक्त्या बोधः ।

'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।
बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥'

एतेन समासे विशिष्टशक्त्यभ्युपगमे तु न कस्या अपि व्युत्पत्तेर्विरोध इति दिक् ।

( ५५ ) प्रश्नः—षष्ठ्यन्तभिन्ने बहुव्रीहौ परमते के दोषाः ? तन्निरसनपूर्वकं स्वमतं स्थाप्यताम् ।

अथवा

**प्रश्नः—अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना विवेचनीया ।**

**उत्तरम्**—ननु 'चित्रगुरि'त्यादिषु स्वस्वाम्यादिप्रतीतिः समुदायशक्त्यैव भवति । न च लक्षणयाऽप्यभ्युपगमः स्वशक्यसम्बन्धायोगात् । सा च चित्रपदे यदि 'चित्रस्वामी गौरि'ति बोधापत्तेः, गोपदेऽपि न गोस्वामी चित्र इत्यन्वयबोधापत्तेः । चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन, लक्ष्यगोस्वामिरूपपदार्थैकदेशत्वेनेत्यर्थः । एकपदार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेनापरपदजन्योपस्थितेर्हेतुत्वात् । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायविरोधाच्च न तादृशान्वयसम्भवः । गोपदस्यान्यपदार्थे स्वामिनि साक्षात्सम्बन्धश्चित्रपदार्थस्य तु गोद्वारक इति परम्परया विनिगमकसत्त्वाद् गोपदस्यैव लक्षणा न षष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पनमिति चेन्न, बोध्यमानस्य स्वामिनो द्वेधा भानापत्तेः, चित्रपदं तात्पर्यग्राहकमुत गोपदमित्येकतरपक्षपातियुक्तिविरहात् । न चोत्तरपदे सा प्रत्ययार्थान्वियानुरोधात् अनेकसुबन्तानामन्यपदार्थप्रतिपादकत्वेन 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासासम्भवात् । एवमेवोदकपदमात्रश्रवणान्न लक्ष्यार्थबोधः, तदानीं लक्षणाकल्पिकायास्तात्पर्यग्राहकपूर्वपदोपस्थितेरभावात् । एवं सति व्यपेक्षावादिनां नैयायिकमीमांसकानां मते समासे न भिन्ना शक्तिः समर्थसूत्रे 'परस्पराऽन्वययोग्यत्वरूपसामर्थ्यमेव व्यपेक्षा' तादृशसामर्थ्येनैवार्थबोधात् । 'राजपुरुष' इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्ध्यभिन्नपुरुषो बोध इति चेन्न, अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना अगत्या शक्त्यन्तरकल्पनापत्तेः । तथा च 'राजा पुरुषः' इत्यादावपि राजादिपदार्थस्य स्वस्वामिभावसम्बन्धेन पुरुषादावन्वयवारणाय निपातातिरिक्तनामार्थनिष्ठाभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययनिपातान्यतरजन्योपस्थितेर्हेतुत्वकल्पने गौरवादिति दिक् ।

**( ५६ ) प्रश्नः—स्वमते शक्तेः स्वरूपं प्रतिपाद्य परमतं निराकरणीयम् ।**

**उत्तरम्**—'इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा । अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथे'ति कारिकया स्वमते अनादिभूतं शब्दनिष्ठबोधकारणत्वं शक्तिरिति सिद्धान्तितम् । अत्र नैयायिका आधुनिकदेवदत्तादिपदेषु उक्तशक्ते-

रभावात्ततो बोधानापत्तेः, अतः सङ्केतज्ञानमन्तरा बोधादर्शनेन सङ्केत एव शक्तिः। आधुनिके च पित्रादेर्गवादौ चेश्वरस्येति वक्तुं शक्यमिति नैयायिकमतमयुक्तं, सङ्केतस्य स्वरूपतो हेतुत्वेऽगृहीतशक्तिकपदादप्यर्थबोधापत्तिः सामान्यतो ज्ञातस्य हेतुत्वे प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गः। सङ्केतत्वेन सङ्केतज्ञानस्य हेतुत्वे गवादावीश्वरसङ्केतस्य सत्त्वेनेश्वरानङ्गीकर्तॄणां तत्तदर्थबोधजनकत्वग्रहवतां बोधेन व्यभिचारः अर्थधीजनकतावच्छेदकत्वेन सङ्केतज्ञानस्य गुरूभूतस्य हेतुत्वकल्पनापेक्षया लाघवादर्थधीजनकतात्वेनैव हेतुत्वे वैयाकरणमतसिद्धेः। न चाधुनिकदेवदत्तादौ सङ्केतज्ञानादेव बोधेनास्य व्यभिचार इति वाच्यम्, इदं पदममुमर्थं बोधयत्वितीच्छाग्रहे पदे तदर्थबोधकत्वस्य विषयीकरणेनादोषात्। न च नेदं तद्बोधकमिति ज्ञानवतोऽपि अस्मात् पदादयमर्थो बुद्धोऽनेनेति परग्रहाधीतदर्थबोधजनकत्वग्रहेण तद्विषयकशाब्दबोधवारणायेतराविशेषणत्वेन बोधजनकताज्ञानं कारणं वाच्यम्। नेदं तद्धीजनकमिति प्रतिबन्धकसद्भावेन पदे परग्रहं जानतोऽपि तदग्रहासम्भवादन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति दिक्।

( ५७ ) प्रश्नः—साधुशब्देष्विवासाधुशब्देष्वपि शक्तिरस्ति न वेति ?

उत्तर—ननु घटादिशब्देभ्य इव गगरीत्यादिशब्देभ्योऽपि कम्बूग्रीवादिरूपार्थावगमात् गवादेरिव गोपोतलिकादेरप्यर्थबोधवत् अपभ्रंशानां वाचकमस्तु चेन्न, असाधुशब्दैः साधुस्मरणादेव बोधो न तु साक्षादिति तार्किकैः सिद्धान्तितम्। एतेन 'असाधुरनुमानेन वाचकः कैश्चिदिष्यते। ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ॥' इत्युक्तं सङ्गच्छते। किञ्च गोपदे उच्चारणीये करणापाटवेन गावीत्युच्चारितं वस्तुतो गोपदमेवेदमिति तादात्म्येन भासमाना गाव्यादिशब्दा गवादिरूपार्थस्य प्रकाशका न वाचकास्तेषां तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकत्वात्। न चापभ्रंशानां साक्षद्वाचकत्वे प्रमाणाभाव इति वाच्यम्, तत्तद्देशभेदभिन्नेषु तेषु शक्तिकल्पने गौरवात्। साधुशब्दवदपभ्रंशानां कोशादौ गणनाभावाच्च न पर्यायतुल्यतेति नैयायिकमीमांसकादिमतम्। वस्तुतस्तु शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वादपभ्रंशानां साक्षाद्वाचकत्वं न तु साधुस्मरणद्वारा, साधुशब्दमजानतां पामराणामपि बोधोदयात्। न चार्थनिरूपितायाः साधुशब्दनिष्ठायाः शक्तेरपभ्रंशेषु भ्रमाद् बोध इति वाच्यम्, बोधकत्वस्याबाधेन शक्तिग्रहस्याभ्रमत्वात्। ईश्वरेच्छाशक्तिरिति पक्षे सन्मात्रविषयिण्यास्तस्या बाधा-

भावात् प्रतीतेर्भ्रमत्वे विषयबाधस्यैव तन्त्रत्वाच्च । अत एव—पारम्पर्यादपभ्रंशादि-गुणेष्वभिधातृषु । प्रसिद्धिमागता येन तेषां साधुरवाचकः ॥ दैवी वाग् व्यवकीर्णे-यमशक्तैरभिधातृभिः । अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥' इति वाक्य-पदीयसङ्गतिः । किञ्च बोधजनकतावच्छेदकानुपूर्व्या पर्यायेष्विव भाषायामपि सत्त्वात् संस्कृतवन्महाराष्ट्रभाषायाः सर्वैरैकत्वेन च विनिगमनाविरहाद् भाषा-यामपि शक्तिः । साधूनामेव कोशादौ विभागाभिधानान्न भाषाणां गणनापत्तिः । न च भाषाशब्दस्यापि साधुतापत्तिरिति वाच्यम्, पुण्यजननयोग्यत्वविशिष्ट-व्याकरणान्वाख्येयत्वं साधुत्वमिति सिद्धान्तात् । द्व्यक्षरं वा नाम कृतं कुर्यादि-त्यादिभाष्यप्रामाण्यादाधुनिकदेवदत्तादिनाम्नामपि साधुत्वमिति दिक् ।

**( ५८ ) प्रश्नः—लक्षणावृत्तिस्वीकारे समुपस्थितदोषान् समुद्भाव्य शब्दशास्त्रदिशा लक्षणावृत्तिस्तिरस्क्रियताम् ।**

उत्तरम्—घटादिपदेऽगृहीतशक्तिकस्य प्रत्यक्षाद्युपस्थितघटादिपदाच्छाब्द-बोधवारणाय शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च हेतुत्व-मिति चेन्न, तथा सति कार्यकारणभावद्वयकल्पने गौरवात् । किञ्च शक्तिजन्यो-पस्थितिं विनापि लक्षणाजन्योपस्थितितः शाब्दबोधादेवं लक्षणाजन्योपस्थितिं विनापि शक्तिजन्योपस्थितितः शाब्दबोधाद् व्यभिचारस्तद्वारणाय स्वाव्य-वहितोत्तरत्वस्वसामानाधिकरण्योभयसम्बन्धेन तत्पदनिष्ठशक्तिज्ञानाधीनोप-स्थितिविशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठशक्तिज्ञानोपस्थितिः कार-णम् । तत्पदनिष्ठलक्षणाज्ञानाधीनोपस्थितिविशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदनिष्ठलक्षणाज्ञानाधीनोपस्थितिः कारणं पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञान-त्वेन लक्षणाज्ञानत्वेन च हेतुता वाच्या, तत्रापि व्यभिचारवारणायाव्यवहितो-त्तरत्वनिवेशे चातिगौरवं लक्षणास्वीकर्तृनये । यद्यपि लक्षणानङ्गीकर्तृमते इदम्पदमेतदर्थबोधकमिति शक्तिज्ञानेन सामान्यतः कार्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानन्तकार्यकारणभावकल्पने गौरवम्, परस्परव्यभिचारवारणाया-व्यवहितोत्तरत्वनिवेशे चापरं गौरवं समानमेव, तथापि शक्तिभ्रमानुरोधेन तत्त-त्पदतत्तदर्थभेदेन पूर्वोक्तगौरवं नैयायिकानामपि । लक्षणाकार्यकारणभावकल्पना-गौरवं वैयाकरणानां नेति लाघवम्, न च शाब्दबोधं प्रति प्रतिवृत्तिजन्योपस्थिति त्वेन हेतुता पदार्थोपस्थितिं प्रति वृत्तिज्ञानत्वेन च कारणतेति स्वीकारान्न लक्षणावृत्तौ गौरवमिति चेन्न, शक्तिलक्षणान्यतरत्वस्य वृत्तित्वस्य कारणता-वच्छेदकत्वे शक्तित्वापेक्षया गुरुत्वात् । न च लक्षणाङ्गीकर्तुरपि शक्तिज्ञानत्वेनैव

हेतुता, शक्यसम्बन्धरूपलक्षणायां शक्तेरपि प्रवेशान्न गौरवमिति चेन्न, तदर्थविषयकोपस्थितिं प्रति तदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञानत्वेन हेतुताया आवश्यकत्वात्। अन्यथा गङ्गातीरयोः सम्बन्धाग्रहवतो गङ्गापदशक्तिं जानतोऽपि तीरबोधप्रसङ्गात्। एवञ्च शक्तिज्ञानत्वेनैव हेतुत्वस्य वक्तुमशक्यत्वाल्लक्षणावृत्तिस्वीकारे पूर्वोक्तगौरवं दुर्वारमेव। तस्मान्न लक्षणाङ्गीकार्या, 'गङ्गायां घोष' इत्यत्र तीरप्रतीतिरप्रसिद्धाशक्त्यैवेति दिक्।

( ५६ ) प्रश्नः—वैयाकरणभूषणसारोक्तिदिशा नञर्थो निरूप्यताम्।

उत्तरम्—नञ्तत्पुरुषसमासे सर्वमतसिद्धेन असर्वादिशब्दे सर्वनामकार्यदर्शनेन उत्तरपदार्थप्राधान्यमनुमीयते, अन्यथाऽतिसर्वायेत्यादाविव सर्वनामकार्यानुपपत्तिः स्यात्। एतेनैव आरोपविषयत्वं नञ्द्योत्यमप्रवस्यति, 'असर्वस्मै' इत्यत्रारोपितः 'सर्वं' इत्यर्थे सर्वशब्दस्य प्राधान्यात् सर्वनामसंज्ञा सिद्ध्यति। नञो भेदार्थकत्वाङ्गीकारेऽतिसर्वं इत्यत्रेव सर्वशब्दस्य प्राधान्याभावात् सर्वनामत्वानुपपत्तिः। न च भेदप्रतियोगिसर्वं इति बोधाभ्युपगमान्नोत्तरपदार्थस्य प्राधान्यहानिरिति वाच्यम्, 'घटो नास्ती'त्यादौ नञर्थविशेष्यकबोधस्यैवानुभवसिद्धत्वात्। न चाघटः पट इत्यत्र घटभिन्नः पट इति बोधो न स्यादिति वाच्यम्, तस्य मानसबोधत्वात्। वस्तुतस्तु 'घटो नास्ति' 'अब्राह्मण' इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात् कः पुनरसौ नञर्थो निवृत्तपदार्थक इति नञ्सूत्रस्थमहाभाष्याच्च नञर्थोऽभाव एव। स च प्रतियोगिनि विशेषणम्। अत एवासर्वस्मै इत्यत्र भेदविशिष्टः सर्वं इत्यर्थे सर्वशब्दस्य प्राधान्यात् सर्वनामता, 'अनेकमन्यपदार्थे' सेव्यतेऽनेकया सन्नतापाङ्ग्येत्यादावेकशब्दार्थप्राधान्यादेकवचनम्, 'अब्राह्मण' इत्यादौ ब्राह्मणशब्दार्थप्राधान्यात्तत्पुरुषत्वम्। 'अत्वं भवसि' 'अनहं भवामी'त्यादौ युष्मदस्मदर्थप्राधान्यात् पुरुषवचनादिव्यवस्था च सम्पद्यते। अन्यथा त्वदभावो मदभावोऽस्तीतिवन्न स्यात्। अथवा प्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थः। 'एतत्तदोरि'ति सूत्रेण परस्परसाहचर्यादकोरिति पर्युदासेन च सर्वनामैतत्तद्भ्यां सोर्हलि लोपो विधीयते। नञ्तत्पुरुषघटकैतत्तदोरुपसर्जनत्वेन सर्वनामत्वाभावादसः शिव इत्यादौ सुलोपप्राप्तौ सूत्रेऽनञ्समासग्रहणेन नञ्समासे गुणीभूतस्यापि सर्वादेः सर्वनामत्वं भवत्येवेति ज्ञापनादसर्वस्मै इत्याद्युपपत्तिः। 'अनेकमन्यपदार्थे' इत्यादावेकवचनं सुबिति विशेष्यानुरोधात्, सेव्यतेऽनेकयेत्यत्रापि योषयेति विशेष्यानुरोधादेकवचनमत एव पतन्त्यनेके इत्यादीनां सङ्गतिः।

'अत्वं भवसि, अनहं भवामी'त्यादौ युष्मदस्मदोः युष्मदस्मद्भिन्ने लक्षणा। तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात् पुरुषव्यवस्थोपपत्तिः। न च नञर्थभेदस्य विशेष्यत्वेऽब्राह्मण इत्यत्र ब्राह्मणप्रतियोगिको भेद इत्यर्थे पूर्वपदार्थ-प्राधान्यात्तत्पुरुषसमासानुपपत्तिरुत्तरपदार्थप्रधानस्तत्पुरुष इति सिद्धान्तादिति वाच्यम्, तत्पुरुषाधिकारपठितत्वं तत्पुरुषत्वमिति महाभाष्यसम्मतत्वादित्यलम्।

(६०) प्रश्नः—प्रादीनां वाचकत्वं द्योतकत्वं वेति निरूप्य सिद्धान्तपक्षः स्थापनीयः।

उत्तरम्—ननु 'प्रादयो द्योतकाश्चादयो वाचका' इति नैयायिकमतं युक्तमिति चेन्न, वैषम्ये बीजाभावात् तथा च तात्पर्यग्राहकत्वरूपं द्योतकत्वं सर्वेषां सम्मतत्वात्, कोशस्वरसादुपसर्गातिरिक्तनिपातानां वाचकत्वमुपसर्गाणां द्योतकत्वमिति वैयाकरणसिद्धान्तः। 'साक्षात् क्रियते' इत्यादौ साक्षात्कारो निपातार्थस्तदनुकूलो व्यापार एव धात्वर्थः, तथा च स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति स्वीकारात् कर्मणि लकारसिद्धिरिति तार्किक-सिद्धान्तः, तन्न, वैषम्ये प्रमाणाभावात्। तथा चेश्वरमनुभवतीत्यादावनुभवादि-र्धात्वर्थो नेत्याद्यापत्तेश्च। विशिष्टार्थोऽपि न गौरवात्। तथा च लक्षणया विद्यमानत्वादिवाचकस्य धातोरेव तदर्थः, उपसर्गस्तु तात्पर्यग्राहकमात्रम्। एवं 'साक्षात् क्रियते' इत्यादावपि साक्षात्कारादिप्रतीतिर्लक्षणया धात्वर्थ एव। कर्मतासंसर्गेण तण्डुलस्य पाकादावन्वयतात्पर्येण 'तण्डुलः पचती'ति प्रयोगस्य प्रामाण्यापत्तिवारणाय नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति नियमात्। 'साक्षात् क्रियते' इत्यत्र धात्वर्थव्यापारेऽनुकूलत्वसम्बन्धेन निपातार्थ-स्यान्वयासम्भवात्। किञ्च भूयान् प्रकर्षः कीदृशो निश्चय इतिवद् भूयान् प्र कीदृशो निरित्यप्यापत्तेश्च। अपि च 'राजा पुरुष' इत्यत्र राजसम्बन्धिपुरुष इति बोधवारणाय अभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वाच्चैत्रमिव पश्यतीत्यत्रेवार्थ-सादृश्ये प्रतियोगितासम्बन्धेन चैत्रस्यान्वयासम्भवात्। पूर्वोक्तनियमस्य निपा-तातिरिक्तविषयकत्वाङ्गीकारे प्रमाणाभावात्। किञ्च शरैरुस्रैरिवोदीच्यानि-त्यादावन्वयो न स्यादिवार्थसदृशस्य करणत्वेऽप्युस्रस्य करणत्वाभावात्। न च विशेषणविभक्तेरभेदार्थकत्वस्वीकारान्नोक्तदोष इति वाच्यम्, उस्रसदृशशराणां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात्। बाधादभेदेनापि न सम्भवः। 'अब्राह्मण' इत्यादौ द्योत्यार्थमादायार्थवत्त्वात्प्रातिपदिकसंज्ञा तत्पुरुष-

समासश्चोपपद्यते । वस्तुतस्तु निपातस्यानर्थकस्येति वचनाद् 'अव्ययादाप्सुपः' इति ज्ञापकाच्च प्रातिपदिकसंज्ञा, तस्माद् युक्तं निपातानां द्योतकत्वम् । अतएव 'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः' इत्यादि भर्तृहरिवचनं सङ्गच्छते । वस्तुतस्तु, 'चन्द्र इव मुखमि'त्यादाविवादि निपातसत्त्वे सादृश्यार्थप्रतीतेश्चेत्यन्वयव्यतिरेकाभ्यां निपातानां घटादिपदवद्वाचकत्वं युक्तं बोधकताशक्तेरबाधात् । किञ्चान्वयव्यतिरेकाभ्यां तिङादीनां वाचकत्ववन्निपातानामपि वाचकत्वं युक्तम् । धात्वर्थप्रातिपदिकार्थयोर्भेदेनेति नियमस्य प्रातिपदिकार्थप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेः कारणत्वमित्यादिनियमस्य च निपातातिरिक्तविषयकत्वाच्चन्द्र इवेत्यादौ नान्वयानुपपत्तिः । एवञ्चासत्त्वार्थकत्वे सति चादिगणपठितत्वं शक्तिसम्बन्धेन निपातपदवत्त्वञ्चोपाधिर्वा जातिर्वा निपातत्वं यन्नैयायिकाभिमतं तदेव वैयाकरणानामपि किन्तु सामान्यधर्मे प्रमाणानां पक्षपाताद्वाचकत्वं द्योतकत्वं वा निपातत्वावच्छेदेनैव । अत एव—'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वे'ति वाक्यपदीयं सङ्गच्छते इति दिक् ।

( ६१ ) प्रश्नः—'तथाऽन्यत्र निपातेऽपि लकारः कर्मवाचकः' कारिकेयं सप्रसङ्गं व्याख्येया ।

उत्तरम्—ननु भूधातुरिव न कृधातुरकर्मकः किन्तु सकर्मक एव, 'क्रियते घट' इति दर्शनात् । 'साक्षात्क्रियते, अलङ्क्रियते शिव' इत्यादावपि शिवनिष्ठं कर्मत्वं कृधातोरेव न तु साक्षादलङादीनाम् । एवमेव 'स्वरान्विकुरुते' इत्यत्र स्वरशब्दनिष्ठं कर्मत्वं कृधातुनिरूपितं निपातानां द्योतकमात्रविषयत्वात् । द्योतकत्वं स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम् । सकर्मकताशक्तिः कृञ्धातावेव विनिपातेन सा व्यज्यते 'वेः शब्दकर्मणः' इत्यनेन चात्मनेपदं विधीयते । अन्यथा यत्र कुत्रचित् सकर्मकत्वदर्शनेन सर्वत्रैव सकर्मकत्वे 'वायुर्विकुरुते' इत्यत्र विकारानुकूलव्यापारवाचकस्यापि सकर्मकतापत्त्या 'अकर्मकाच्च' इति विहितात्मनेपदानुपपत्तिः स्यात् । अतो यदि धातुस्सकर्मकस्तदा प्रादिनिपातसमभिव्याहारेऽपि सकर्मक एव निपातानां स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वात् । चादिसमुपस्थाप्यसमुच्चयस्य नित्यं समुच्चेयसाकाङ्क्षतया समुच्चयार्थकपदप्रयोगं विना चादिप्रयोगासम्भवात् । शब्दशक्तिस्वाभाव्येन नित्यं धातुपरतन्त्रोपसर्गः स्वार्थस्य धात्वर्थविशेषणतयैव बोधनेन तदसमभिव्याहारे तत्प्रयोगस्याप्यसम्भवात् । अत एवोच्यते तुल्यसमाधेयत्वादिति । यदि प्रादीनां नित्यस्य स्व-

तन्त्रतया केवलानां तदर्थे विशेषणानामन्वय इति चेद् ब्रूषे, तदा चादीनामपि नित्यस्य स्वतन्त्रत्वात्तदर्थे विशेषणान्तरान्वयो न सम्भवतीति, 'विष्णुमुपासत' इत्यत्रोपाद्यर्थे कर्माद्यन्वयासम्भवात्तेषामपि द्योतकत्वमेव। यदि निपातानां वाचकत्वे 'चार्थे द्वन्द्वः' इति सूत्रमानं तथाभिमतं तदा प्रादीनामपि वाचकतायाम् 'ईषदुःसुषु' इति सूत्रमानं सम्पद्येत। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयस्यासम्भवः स्यात्। तथा चाभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे विभक्तिजन्योपस्थितिर्विशेष्यतासम्बन्धेन कारणमिति कार्यकारणभावस्यावश्यकत्वात्। वाच्यतया तदभावेनान्वयासम्भवः। उक्तकार्यकारणभावानभ्युपगमे 'राजा पुरुष' इत्यस्य राजसम्बन्धी पुरुष इत्यर्थापत्तेरिति दिक्।

इति निपातार्थप्रकरणम्।

---

## अथ त्वादिभावप्रत्ययार्थनिर्णयः

(६२) प्रश्नः—प्रातिपदिकप्रकृतिकभावार्थकप्रत्ययानामर्थं निरूप्य मीमांसकमतसिद्धार्थजरतीयत्वं समुपपादनीयम्।

उत्तरम्—समासादौ शक्तिः कल्प्यमाना राजादिसम्बन्धविशिष्टे कल्प्यते। राजपुरुषत्वमित्यादौ स्वस्वामिभावसम्बन्धः, 'पक्तृत्वमि'त्यादौ क्रियाकारकभावसम्बन्धः, 'आक्षिकत्वमि'त्यादौ च क्रियाकारकभावसम्बन्धः त्वप्रत्ययेनाभिगम्यते। 'दामोदरत्वं, कृष्णसर्पत्वमि'त्यादौ जातिरेव त्वाद्यर्थः। तदुक्तं वाक्यपदीये—'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य' इति। दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति मीमांसकमतमयुक्तमिति। घटत्वमित्यादौ भावप्रत्ययस्य सम्बन्धानभिधायकत्वेन दण्डित्वमित्यत्रापि सम्बन्धाभिधानं न स्यात्। प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते इति सिद्धान्तात्। एवञ्चार्धजरतीयत्वापत्तेः। न च यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः, तदा गत्यन्तराभावात्। 'सम्बन्धो वाच्य आश्रित' इति सिद्धान्तान्नार्धजरतीयत्वमिति वाच्यम्, इनादेः सम्बन्धिवाचकत्वस्वीकारेणेष्टसिद्धेर्गत्यभावाभावात्। अन्यत्र 'दण्डी पुरुष' इत्यत्र सामानाधिकरण्योपपत्तिः। न च भावप्रत्ययस्य

क्वचिज्जात्यादिवाचकत्वं क्वचिच्च सम्बन्धमात्रवाचकत्वमित्यर्धजरतीयत्वं वैयाकरणानामपि समानमेवेति वाच्यम्, प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारता-मित्यादिसिद्धान्तेन पक्षद्वयस्यापि प्रतिपादनात् । न च घटत्वमित्यत्र प्रकारत्वा-त्तदुत्तरभावप्रत्ययेन घटत्वस्यापि वाच्यत्वे गौरवमिति वाच्यम्, तत्तद्व्यक्ति-विशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वादिरूपत्वात् । तदुक्तं वाक्यपदीये—'सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिष्वि'त्यादि । यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वार्त्तिककारोक्तमपि प्रकृतार्थे विनिगमकम् । यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भाव इति वार्त्तिकोक्तप्रामाण्या-च्छब्दोऽपि त्वाद्यर्थः । हरिहरनलादिशब्देभ्यस्तत्तच्छब्दवाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वसम्मतत्वात् । तथा च क्वचिज्जात्यादिः क्वचित्सम्बन्धः क्वचिच्छब्द एव त्वाद्यर्थ इति दिक् ।

( ६३ ) प्रश्नः—देवतार्थकप्रत्यये ग्रन्थकाररीतिः समुपस्थापनीया ।

उत्तरम्—ननु इन्द्रो देवताऽस्येति विग्रहे 'ऐन्द्रं हविरि'त्यादौ देवतात्वेन रूपेण इन्द्रादेरुपस्थापकाभावात्, इन्द्रदेवतोद्देश्यकं हविरिति शाब्दबोधः कथं स्या-दिति चेन्न, 'सास्य देवते'ति विहितप्रत्ययस्य देवताविशिष्टदेयार्थकत्वेनादोषात् । न चेन्द्रादिपदादेव देवताया लाभसम्भवात्तत्र शक्तिकल्पनमयुक्तमिति वाच्यम्, देवतात्वेन रूपेणोपस्थितये शक्तिकल्पनस्यावश्यकत्वात् । अत एव आमिक्षां देवतायुक्तां वदत्येवेष तद्धित इत्यादि मीमांसकोक्तं सङ्गच्छते । न च पदार्थः पदार्थेनेति सिद्धान्तात्, देवताया एकदेशत्वात् कथं तत्र प्रकृत्यर्थस्यान्वय इति वाच्यम्, देवतायां प्रदेये च खण्डशः शक्तिस्वीकारेणादोषात् । न च लक्षणया प्रकृत्यैव देवतात्वेन रूपेणोपस्थितिसम्भवात्तत्र शक्तिकल्पनं विफलमिति वाच्यम्, प्रदेयमात्रे शक्तिस्वीकारेणादोषात् । ननु 'ऐन्द्रं दधि' इत्यादौ समभि-व्याहृतदध्यादिपदादेव द्रव्यस्यापि लाभात् प्रदेयेऽपि शक्तिस्वीकारो व्यर्थ इति चेन्न, दध्यादिपदसमभिव्याहाराभावे द्रव्यप्रतीतये शक्तिकल्पनस्यावश्यकत्वा-दैन्द्रं दधीति सामानाधिकरण्याच्च । 'तदस्यां प्रकरणमि'ति विहितणप्रत्ययस्यापि प्रकरणविशिष्टा क्रीडा प्रकरणक्रीडे क्रीडामात्रं वार्थः । न च वृत्तिमात्रेऽतिरिक्त-शक्तेः स्वीकारान्नायं विचारो युक्त इति वाच्यम् ? आरोपितप्रकृतिप्रत्ययार्थ-मादाय तदुपपत्तेरिति दिक् ।

( ६४ ) प्रश्नः—अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिरिति कारिका सप्रसङ्गं व्याख्येया ।

उत्तरम्—ननु राजपुरुष इत्यादिवृत्तौ एकत्वत्वाद्यवच्छिन्नसंख्याविशेषस्य बोधः कुतो नेति चेन्न, 'यथौषधिरसाः सर्वे मधुन्याहितशक्तयः । अविभागेन वर्त्तन्ते संख्यान्तान्तादृशी विदुरि'ति वाक्यपदीयेन अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिर्वैयाकरणानामित्यदोषात् । अयं भावः—कपिञ्जलानामेवेति वाक्येन बहुत्वव्याप्यसंख्याविशिष्टकपिञ्जलालम्भनं विधीयते तत्र त्रयाणां चतुरादीनां वा आलम्भनमिति संशये प्रथमोपस्थितत्रित्वपरतयाऽपि विधेश्चारितार्थ्याल्लाघवेन त्रित्वमेव बहुवचनार्थं इति सिद्धान्तितम् । तद्वद् वृत्तावपि संख्यात्वेन एकत्वस्यैव वृत्त्यर्थत्वं न तु द्वित्वादीनां तद्रूपेण जिज्ञासानुदयात् अप्रतीयमानविशेषधर्मकैकत्वमभेदैकत्वं संख्या सामान्याभाव इत्याशयेन प्रपञ्चितः सारकृतेति दिक् ।

( ६५ ) प्रश्नः—उद्देश्यविधेययोः संख्याविवक्षाऽविवक्षाविषये सारकृतः सिद्धान्तः प्रतिपाद्यताम् ।

उत्तरम्—ननु सम्मार्ष्टीत्यत्र यथा सर्वग्रहसम्मार्गाय ग्रहगतैकत्वमविवक्षितमत एव यावन्तो ग्रहाः पात्राणि तेषां सर्वेषां सम्मार्गः सिद्ध्यति तथा व्याकरणे धातोरित्येकत्वस्य विवक्षणात् । अत एव—'उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि । तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुबर्थवदि'ति भट्टपादोक्तिरपि सङ्गच्छते । 'आर्द्धधातुकस्येड्वलादेरि'त्यत्रोद्देश्यार्द्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च । 'पशुना यजेते'तिवद्विधेयविशेषणं शास्त्रे विवक्षितमेव, तेन सुद्ध्युपास्य इत्यादौ नानान्त्यकाराद्यापत्तिः । न च 'आद्गुणः' इत्यादौ विधेयगुणगतैकत्वस्य विवक्षयैवोपपत्तौ 'एकः पूर्वपरयोरि'ति सूत्रे एकग्रहणवैयर्थ्यापत्तिरिति वाच्यम्, स्थानिभेदादेशभेदवारणाय तस्य चारितार्थ्यात् । न च 'रदाभ्यामि'ति सूत्रे विधेयनकारगतैकत्वस्य विवक्षणाद् भिन्न इत्यत्र नकारद्वयलाभो न स्यादिति वाच्यम्, निष्ठान्तस्य न पूर्वस्य दकारस्य च नः, इति वाक्यभेदस्वीकारेणादोषात् । एवञ्चोद्देश्यविशेषणं क्वचिद्विवक्षितं क्वचिन्न विधेयविशेषणं विवक्षितमेवेति दिक् ।

( ६६ ) प्रश्नः—क्त्वातुमुनादिप्रत्ययार्थः संक्षेपेण विलिख्यताम् ।

उत्तरम्—अव्ययकृतो 'भावे' इति वार्तिकात् क्त्वातुमुनादीनां भावार्थकत्वं निर्धारितम् । ननु 'समानकर्तृकयोः पूर्वकाले' इत्यादेः का गतिरिति चेत्सत्यं, 'भोक्तुं पचति, भुक्त्वा व्रजती'त्यादौ क्रिययोरेकवाक्यतासिद्धये विशेषणविशेष्यभावनिरूपकः जन्यत्वं सामानाधिकरण्यं पूर्वोत्तरभावः, व्याप्यत्वञ्चेत्याद्यनेकविधः

सम्बन्धः सूत्रतो लब्धः। तेन भोजनसमानाधिकरणात्तदुत्तरकालिकी व्रजनादि-क्रियेत्यादिबोधः, 'भुक्त्वा तृप्त' इत्यतो भोजनजन्या तृप्तिरिति बोधात् जलपाना-नन्तर्यस्य तृप्तौ सत्त्वेऽपि 'पीत्वा तृप्त' इति न प्रयोगः। 'अधीत्य तिष्ठति', मुखं व्यादाय स्वपिती'त्यादौ कालविशेषावच्छिन्नव्याप्यबोधाद् व्याप्यत्वं सामानाधि-करण्यं च सम्बन्धः। एवं च पूर्वोक्तसम्बन्धानामाकाङ्क्षानियम्यत्वात् वाक्य-शक्तिलभ्यत्वाच्च न तेषां सूत्रतो वाच्यलाभः किन्तु भावस्यैव। तेन प्रकृत्यर्थ-क्रिययोरुक्तसंसर्गे तात्पर्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनामिति सिद्ध्यति। केचित्तु 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यादौ तृतीयावारणाय क्त्वाप्रत्ययस्य कर्तृ-वाचित्वमावश्यकम्।

न चाख्यातेन कर्तुरुक्तत्वान्न तृतीयेति वाच्यम्? भोजनक्रियाकर्तुरभिधाने-ऽपि पाकक्रियाकर्त्तुस्तदभावात्। अत एव 'प्रासादे आस्ते' इति भाष्यप्रयोगे सप्तमी सिद्धेत्याहुः, तन्न, सूत्रात् कर्तुर्वाच्यत्वालाभात्। तृतीया तु न 'प्रधाने-तरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रतीयत'॥ इति वाक्यपदीयात्। अत एव पक्त्वौदनो मया भुज्यते इत्यादि सिद्धिरिति दिक्।

( ६७ ) प्रश्नः—'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्' इति कारिका सप्रसङ्गं व्याख्येया।

उत्तरम्—गुणप्रधानक्रियानिरूपितशक्तिद्वयं यत्रैकस्मिन् द्रव्ये तत्र गुणक्रिया-निरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिधर्ममनुरुणद्धीत्यर्थः। प्रधानविषयेति। प्रधानो विषयो निरूपकं यस्याः सा शक्तिर्यदा प्रत्ययेन तिङाऽभिधीयते, तदा गुण-क्रियावाचकधातूत्तरप्रत्ययेनानभिहिताप्यभिहितवत् प्रतीयत इत्यर्थः। इदमुप-लक्षणम्। अभिहिता अपि अनभिहितवत्प्रतीतेः। तत्र 'प्रासादे आस्ते' इत्युदा-हर्तव्यम्। अवश्यं चेत्थमभ्युपेतव्यम्। अन्यथा कर्तुः क्त्वार्थत्वाभ्युपगमेनोक्तस्थले तृतीयापत्तिवारणेऽपि 'पक्त्वौदनो मया भुज्यते' इत्यत्रौदनपदोत्तरद्वितीयापत्ति-र्दुर्वारा। तत्र पाकक्रियानिरूपितकर्मत्वशक्तेः कृतानभिधानादुक्तरीतेरसम्भवा-दिति दिक्।

इति क्त्वातुमुनाद्यर्थप्रकरणम्।

---

## अथ स्फोटनिरूपणम्

( ६८ ) प्रश्नः—अष्टानां स्फोटानां नामानि निर्दिश्य वर्णस्फोटो निरूपणीयः ।

उत्तरम्—ननु वृत्त्याश्रयः पदार्थः कः ? वर्णा इति चेन्न, प्रत्येकं वर्णानां वृत्त्याश्रयत्वं समुदितानां वा आद्ये द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तिः, प्रथम-वर्णोच्चारणादेव तदर्थविषयकप्रतीतिसम्भवात् । अन्त्ये उच्चरितप्रध्वंसितत्वेन यौगपद्यासम्भवात् । एकस्मृत्युपारूढानां वाचकत्वे सरो, रसो, नदी, दीन इत्यादौ प्रतीतिवैलक्षण्यानुपपत्तेः । तस्मात् वृत्त्याश्रयस्य स्फोटस्यैव वाचकत्वम् । स्फुट-त्यभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्यार्थप्रकाशकत्वं प्रकाशश्च ज्ञानरूपम् । तथा चार्थनिष्ठविषयताप्रयोगकशक्तिमत्वं पर्यवस्यति । वर्णस्यैव तत्त्वाभ्युपगमे वर्ण-स्फोटः । पदादीनां तत्त्वाभ्युपगमे तु पदादिस्फोट इति व्यवहारः । तथा च वर्ण-स्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्ण-जातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटश्चेत्यष्टौ स्फोटास्तथापि प्रथमोपस्थितत्वाद् वर्णस्फोटो निरूप्यते । 'पचति राम' इत्यादौ प्रयोगान्तर्गता-स्तिविसर्गादयो न वाचकाः । तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः । 'एधाञ्चक्रे ब्रह्मे'त्यादावादेशलुगादेरभावरूपस्य बोधकत्वासम्भवाच्च । 'लः कर्मणी'त्याद्यनु-शासनादादेशैः स्मृता लादयः स्वादयश्च वाचकाः, लत्वस्य जातिरूपत्वेन शक्ततावच्छेदकत्वौचित्यात् । आदेशानां भिन्नत्वेन परस्परव्यभिचारवारणाया-व्यवहितोत्तरत्वघटितकार्यकारणभावे गौरवाच्चेति नैयायिकाः ।

अत्रोच्यते—साधुशब्दान्तर्गतास्तिविसर्गादय एव वाचकाः न तु तैः स्मृताः स्थानिनः । पचतीत्यादौ लकारमजानतोऽपि जनस्य बोधोदयात् । न च तिङ्क्षु शक्तिभ्रमाद् बोध इति वाच्यम्, विषयबाधस्यैव भ्रमत्वे तन्त्रतया बोधकत्वशक्ते-स्तत्राबाधात् । स्थानिनामपि शाकटायनप्रभृतिभिः स्वेच्छया भिन्नानामभ्युप-गमात् सर्वत्र शक्तिस्वीकारे गौरवव्यभिचारयोर्दुर्वारत्वाच्च । किञ्च शक्तिग्राहक-शिरोमणिना व्यवहारेण श्रूयमाणतिङादिष्वेव शक्तिर्बोध्यते, अत एव वाचकाः । किञ्च लकारस्य वाचकत्वे 'भू ल्' इत्यतो भवनकर्तृबोधवारणाय, तादृशबोधे भवतीति समभिव्याहारस्य कारणत्वकल्पनेऽतिगौरवात् । किञ्च तस्यैव वाचकत्वे तिङो भावनावाचकता शानजादेः कर्तृवाचकतेति त्वत्सिद्धान्ताऽसङ्गतिः, लकार-स्योभयत्रैक्यात् । न च 'कर्त्तरि कृदि'त्यनुशासनात् कृतिर्लकारार्थं आश्रय शान-

ऽर्थं इति स्वीकारान्नोक्तदोष इति वाच्यम् । स्थान्यर्थेन निराकाङ्क्षतया शान-जादौ 'कर्त्तरि कृदि'त्यस्याप्रवृत्तेः । न च 'देवदत्तः पचमानः' इत्यत्र सामाना-धिकरण्यानुरोधात् शानजादेः कर्तृवाचित्वमावश्यकमिति वाच्यम्, 'पचतितरां मैत्र' इत्यत्र तिङोऽपि कर्तृवाचकतापत्तेः । लक्षणया सामानाधिकरण्योपपादने 'पचमान' इत्यत्राऽप्यापत्तेः । एतेन प्रयोगान्तर्गता वर्णा वाचका इति वर्णस्फोटस्य वाचकत्वं सिद्धम् । 'लः कर्मणी'त्यनुशासनं कल्पितलकारे बोधकताशक्ति तिबादिनिष्ठामादाय प्रवृत्तमिति दिक् ।

( ६९ ) प्रश्नः—पदस्फोटो निरूप्यताम् ।

उत्तरम्—वर्णस्फोटोक्तयुक्तिभिः समभिव्याहृतवर्णानां वाचकत्वसिद्धौ तादृशवर्णसमुदायरूपपदस्य वाचकत्वं सुतरां सिद्ध्यति, प्रतिवर्णमर्थस्मरणस्य सकलानुभवविरुद्धत्वात् । प्रत्येकवर्णानामर्थवत्त्वे प्रातिपदिककार्यापत्तेश्च । रामोऽस्ती'ति वक्तव्ये 'राम्' इत्यनन्तरं घटिकोत्तरमकारोच्चारणेऽर्थबोध-वारणाय तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यात् । वर्णस्फोटवादिनां तु चरमवर्णे एव वाचकत्वशक्तिः, शक्तेर्व्यासज्यवृत्तित्वे मानाभावात् । पूर्वपूर्ववर्णा-नुभवजन्यसंस्काराश्चरमवर्णार्थबोधजनने सहकारिण इति मतस्य व्यभिचरित-त्वात् । तथा च वर्णसमुदायो वाचक इति पदस्फोटपक्षे पर्यवस्यति । शास्त्रकार-सङ्केतितसुप्तिङन्तपदस्यापि वाचकत्वं 'घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्थिते'त्यादिना सदृष्टान्तं विशदय्य समर्थितमिति दिक् ।

( ७० ) प्रश्नः—वाक्यस्फोटो निरूप्यताम् ।

उत्तरम्—'सर्वे सर्वपदादेशा' इति सिद्धान्तात् 'विष्णोऽव, हरेऽवे'त्यादौ पदयोः 'एङः पदान्तादति' इत्येकादेशे सति प्रत्येकं पदाज्ञानेऽपि समुदायशक्ति-ज्ञानेन बोधोदयात् समुदायेऽप्यावश्यकी शक्तिः । एवञ्च पदैर्यथा पदार्थबोधे पदार्थनिरूपितशक्तिः पदेऽस्ति तथा वाक्यैर्वाक्यार्थबोधे वाक्यार्थनिरूपितपद-निष्ठबोधकताशक्तिज्ञानस्येव वाक्यार्थविषयकबोधं प्रति पदसमभिव्याहाररूप-वाक्यनिष्ठबोधकताशक्तिज्ञानस्यापि हेतुत्वात् सिद्धो वाक्यस्फोटः । अत एव 'घटकर्मत्वमानयनं कृतिरि'त्यतो न तादृशव्युत्पत्तिरहितस्य बोधः । न च वाक्यार्थस्य शाब्दबोधात् प्रागनुपस्थितत्वात् कथं तत्र शक्तिग्रह इति वाच्यम्, पदानामेवान्वितपदार्थे शक्तिरितिवदुपपत्तेः । वस्तुतस्तु वृद्धव्यवहारं पश्यतो बालकस्य समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहः । पश्चादवापोद्वापाभ्यां

प्रत्येकं शक्तिग्रह इति नोक्तदोषः । न चाशु विनाशिनां क्रमिकाणां मेलनासम्भवादन्तिमवर्णोत्पत्तिकाले तदभिव्यक्तिकाले वा पूर्वपूर्ववर्णानां तावदभिव्यक्तानामवस्थानासम्भवेन तत्समूहरूपपदस्य वाक्यस्य वा ज्ञानासम्भव इति वाच्यम्, उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्वस्य तथा तदुत्तरप्रत्यक्षकाले उपस्थितिविशिष्टतद्वर्णवत्वस्य च तस्मिन् सुग्रहत्वात् । तथा चानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि ज्ञानसम्भवाद् इति दिक् ।

( ७१ ) प्रश्नः—अखण्डस्फोटो निरूप्यताम् ।

उत्तरम्—ननु वर्णपदवाक्योपाधिभी रुषितः स्फोटो वर्णस्फोटः, पदस्फोटः, वाक्यस्फोट इत्यादिव्यवहारमापन्नोऽपि, घटमठाद्युपाधिवशाद् 'घटाकाशम्' 'मठाकाशमि'त्यादिव्यवहारमापन्नमाकाशवन्नित्यः । यथा मायाऽविद्योपाधिवशादेकमपि चैतन्यमीश्वरजीवादिव्यवहारं भजते । तथैव स्फोटोऽपि वर्णपदवाक्याद्युपाधिभिस्तत्तद्व्यवहारमापन्नोऽपि नाखण्डत्वं जहाति । तदुक्तं हरिणा—

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥'

अयं भावः—पदं वाक्यं चाखण्डमेव अनन्तवर्णादिकल्पने मानाभावात् । ननु गकारः, ककार इत्यादिप्रतीतिरेव मानमिति चेन्न, ऋकारैकारौकारादिषु प्रतीयमाना अपि अवयवा यथा न तथैवेत्यदोषात् । कुतस्तर्हि प्रतीतिर्वैजात्यमिति चेच्छृणु तत्तद्वर्णोत्पादकत्वेनाभिव्यञ्जकत्वेन वाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो, गकार इत्यादि प्रतीतिर्वैलक्षण्यमिति । अत एव वाचस्पतिमिश्रपादैर्भामत्यां देवताधिकरणे तारत्वादिवायुनिष्ठं वर्णेष्वारोप्यत इत्युक्तम् । न चोत्पन्नो नष्टो वा ककार इत्यादिप्रतीत्यनुपपत्तिरिति वाच्यम्, 'सोऽयं ककार' इत्यभेदतत्प्रत्यभिज्ञारूपबाधकसत्त्वेन तादृशप्रतीतेर्भ्रमत्वात्, स्फोटस्य नित्यत्वाच्च । न चैवं वायुसंयोगस्यैव वाचकत्वं कुतो नेति वाच्यम्, प्रत्यक्षोपलक्ष्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । एवं च वाचकत्वानुपपत्त्या 'तदेवेदं पदम्, तदेवेदं वाक्यम्, सोऽयं ककार' इत्यादिप्रतीत्या च स्फोटोऽखण्डः सिद्ध्यति ।

( ७२ ) प्रश्नः—स्फोटस्याखण्डत्वे शास्त्रसार्थक्यं प्रतिपादयत ।

उत्तरम्—ननु पदस्याखण्डत्वे शास्त्राप्रामाण्यप्रसङ्गः । शास्त्रस्य प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादिति चेन्न, पञ्चकोशकल्पनावदवास्तवप्रकृतिप्रत्ययवाचकत्वव्युत्पादनं वास्तवस्फोटनिष्ठवाचकत्वबोधनायेत्यदोषात् । न च प्रत्य-

क्षस्य स्फोटस्य श्रवणादितोऽपि बोधसम्भवान्न शास्त्रं तदुपाय इति वाच्यम्, 'उपायस्योपायान्तरादूषकत्वा'दिति न्यायेन मन्त्रजन्यं वैलक्षण्यं कल्प्यत इत्यदोषात् । साक्षात् परम्परया वा स्वर्गमोक्षादिहेतुत्वञ्च तज्ज्ञानस्य । तदुक्तं वाक्यपदीये—'तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सित'मित्यादि । न च शशशृङ्गादिवदलीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोध इति वाच्यम्, रेखागवयादिनिष्ठलाङ्गूलादिवद् बोधसम्भवादिति दिक् ।

( ७३ ) प्रश्नः—स्फोटात्मकवर्णस्यैकत्वं सामर्थ्योदात्तत्वादिकं वर्णनिष्ठं न वेति निरूप्यताम् ।

उत्तरम्—ननु समवायेन तादृशजातीनां स्फोटावृत्तित्वेऽपि स्वाभिव्यञ्जकसमवायस्य तत्र सत्त्वेन तस्य स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेनोपाधित्वं सम्भवतीति । एवञ्चैतादृशसम्बन्धस्य वायुसंयोगसत्त्वकाल एव सत्त्वमित्युत्पत्त्यादिप्रतीतीनान्नानुपपत्तिः । कत्वादेर्वायुसंयोगगतधर्मस्य श्रोत्रग्राह्यत्वमपि स्वसमवेताभिव्यञ्जकसमवेतत्वसम्बन्धेन बोध्यम् । अत एव वर्णमुत्पादयतीति न व्यवहारः किन्तूच्चारयतीत्येव प्रत्ययः । उच्चरितत्वञ्च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । किञ्च ध्वनिनिष्ठोत्पत्त्यादेः स्वाश्रयध्वनिव्यङ्ग्यत्वसम्बन्धेन वर्णनिष्ठत्वान्नोक्तप्रतीतिवर्णानित्यत्वसाधिका सोऽयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत् साक्षात् लाघवम् । न च ध्वन्युत्पादकसंख्याद्यभावात् वर्णस्थले ध्वनिसत्त्वे प्रमाणाभाव इति वाच्यम् । जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वात्तस्य च वर्णोच्चारणस्थलेऽपि सत्त्वादुक्तसम्बन्धविषयकप्रतीतिर्निराबाधा । एवञ्च परस्परविरुद्धानामुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादीनां यथा वर्णावृत्तित्वं मीमांसकैः स्वीक्रियते तथाऽखण्डवाक्यस्फोटस्वीकर्तृभिरपि वर्णावृत्तिमुत्पत्त्यादेरित्यदोषादिति दिक् ।

( ७४ ) प्रश्नः—वैयाकरणभूषणसारदिशा जातिस्फोटः संसाध्यताम् ।

उत्तरम्—ननु व्यक्तीनाम्बाहुल्याद्वाच्यत्ववाचकत्वकल्पनापेक्षया जातेस्तथात्वे तासामेकत्वाल्लाघवम् । ननूक्तरीत्या स्फोटातिरिक्तवर्णानामसत्त्वाद् गतो जातेर्वाचकत्वविचारो गगनकुसुमायमान इत्याशङ्कामपनेतुं स्फोट एव व्यक्तिरूपस्तावन्नाङ्गीकार्यं इति प्रतिपादयति । वर्णानङ्गीकारसहितस्फोटाङ्गीकारे 'सोऽयं गकार' इतिवद् 'योऽयं गकारः' श्रुतः, 'सोऽयं हकार' इति प्रतीत्यापत्तिः, गकारोऽयं न हकार इति प्रतीत्यनुपपत्तिश्च स्फोटस्यैकत्वात् । किञ्च गत्वादि-

विरुद्धधर्माध्यासमूलकभेदप्रतीत्यर्थे स्फोटे गत्वादिभानाङ्गीकारे तु गत्वमेव गकारोऽस्तु मीमांसकैर्धर्मधर्मिणोरभेदाभ्युपगमात्। स्फोटे गत्वाद्यनभ्युपगमे गादिप्रतीत्यनुपपत्तिः वायुसंयोगवृत्तिर्ध्वनिवृत्तिर्वा गत्वादिर्वैजात्यमादाय तथा प्रत्ययस्तु वक्तुं शक्यः। प्रतीतेर्विना बाधकं भ्रमत्वायोगात् तस्मात् स्फोटे सन्त्येव वर्णाः परन्तु न वाचकाः। तत्तद्वर्णभेदभिन्नानन्तशक्तिकल्पने गौरवात्। आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद् वाचकत्वस्यापि युक्तत्वात्। न च तादृशजातौ प्रमाणाभाव इति वाच्यम्, इदं हरिपदमित्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकताया च जातिविशेषस्यावश्यकत्वात्। न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाह इति वाच्यम्, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः। तस्माज्जातिरेव वाचिका तादात्म्येनावच्छेदिका च। न च सरो रस इत्यादौ तयोर्जात्योः सत्त्वादर्थबोधभेदो न स्यादिति वाच्यम्, आनुपूर्वीवैलक्षण्येन वर्णानां तारत्वमन्दत्ववदुपपत्तेः। नन्वेवमपि जातेः प्रत्येकं वर्णेषु सत्त्वात् प्रत्येकादर्थबोधापत्तिरिति चेन्न, पदवाक्यलक्षणायास्तस्या जातेर्व्यासज्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वात्। प्रतिपदार्थं जातेः द्वावंशौ—सत्यासत्यरूपौ, तत्र सत्यांशो जातिरसत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति तात्पर्यात्। तदुक्तं कैयटेन—'असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमि'ति। ब्रह्मतत्त्वमेव शब्दस्वरूपतया भाति। ननु ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम्, 'आत्मैवेदं सर्वमि'ति श्रुतिवचनादिति कैयटः कथं सङ्गच्छतामिति चेन्न, जातिरपि अविद्यको धर्मविशेष एवेत्याशयात्। सत्यांशरूपं शुद्धं शब्दतत्त्वमेव ब्रह्म तज्ज्ञानान्मोक्ष इति शम्।

'पारसनाथशिष्यस्य रामकिशोरधीमतः।
कृतिः भूषणसारस्य दीपिका दीप्यता बुधैः ॥'

इति बाँदामण्डलान्तर्गतरमपुरवाग्रामवास्तव्येन रामावती-
गर्भजेन श्रीरामरुचिपुत्रेण पण्डितराम किशोरेण
कृता भूषणसारदीपिका।

---